वृत्तजातीनां समुच्चयं शिष्यजनसुखावबोधनार्थमाह—दुवई इत्यादि ।

दुवईगीइअगाहाखंधअगीईविलासिणीआण ।
उवगीईनिव्वाइअवाणासिअखंजआणं च ॥ ४ ॥
परिणंदिअआणंदिअकीलणअतरंगआण सम्माण ।
अहिअक्खरनक्कोडअरमणिज्जअदुवहआणं च ॥ ५ ॥
मागहिआमत्ताणं अडिलारड्डाण ढोसरूआण ।
रासअसीसअतिअलअदंडअखंडु[ग्ग]आणं च ॥ ६ ॥
वइआलिअउवछंदसआवा[अ]लिआण उग्गआणं च ।
कुट्टुंभअछित्तअभित्तआण स(सा)मुग्गआणं च ॥ ७ ॥
गाहस्स सणाराअस्स ललिअभमरावलीकुमुअआण ।
उप्फुल्लअसंग[1]अआण बिंदुतिलआण वीहीण ॥ ८ ॥
ओलंवचउप्पयएक्कआण विंटलअहंसिणीणं च ।
खडहडअखेडआणं सोवाणअसालहंजीण ॥ ९ ॥
तलतालवेण्टआणं उग्गीआणं मणोरमाणं च ।
अंबु (तु) ल्लअचंदुज्जे(ज्जो)अआण तह रासआणं च ॥ १० ॥
संदाणिअअविसेसअचक्कलआणं च कुलअगलिआण ।
गोवित्तप्पमुहाण अ कमेण तह वण्णवित्ताण ॥ ११ ॥
सव्वाणं पत्थारं नट्ठुद्दिट्ठं च लहुकिअं संखं ।
अद्धाणेण समग्गं कहेमि छप्पच्चए तह अ ॥ १२ ॥

द्विपदीगीतिकागाथास्कन्धकगीतिविलासिनीनाम्[2] ।
उपगीतिनिर्वापिता[3]बाणासिकारवञ्जकानां च ॥ ४ ॥
परिनन्दितं[4]आनन्दितक्रीडनकतरङ्गकानां श्यामानाम्[5] ।
अधिकाक्षरानर्कुटकरमणीयकद्विपथकानां च ॥ ५ ॥
मागधिकामात्राणामडिलारड्डानां[6] ढोषरूपाणाम् ।
रासकशीर्षकत्रिकलकदण्डकखण्डोद्गतानां च ॥ ६ ॥
वैतालीयौपच्छन्दसकौपातलिकानामुद्गतानां[7] च ।
कोट्टुम्भकछित्तकभित्तकानां सामुद्गकानां च[8] ॥ ७ ॥
गाह(थ)स्य सनाराचस्य ललितभ्रमरावलीकुमुदकानाम् ।
उत्फुल्लकसंगतकानां बिन्दुतिलकानां वीथीनाम् ॥ ८ ॥
अवलम्बचतुष्पदैककानां वृन्तकल(लक)हंसिनीनां च ।
खडहडकखेटकानां[9] सोपानकसालभञ्जीनाम् ॥ ९ ॥

---

१ उफुल्लअसंगअसंगआण AB. २ गीतिचविला० AB. ३ रिवापिता AB. ४ परिनन्दनानन्दक क्रीनक AB. ५ सस्यामां AB. ६ रशनां मेप. ७ कौपातलि० AB. ८ कोट्टुमरिअछित्तक AB. ९ खोडकानां AB.

तलतालवृन्तकानां उद्गीतानां मनोरमाणां च ।
अन्धु(न्तु)ल्लकचन्द्रोद्योतकानां रासकानां च ॥ १० ॥
संदानितकविशेषकचक्कलि(ल)कानां च कुलकगलितानाम् ।
गोवृत्तप्रमुखानां क्रमेण तथा वर्णवृत्तानाम् ॥ ११ ॥
सर्वेषां प्रस्तारान्नष्टोद्दिष्टौ च लघुक्रियां संख्याम् ।
अध्वना समग्रां कथयामि षट् प्रत्ययांस्तथा ॥ १२ ॥

एतेषां यैम्बो(थो)द्दिष्टानां वृत्तानां प्रस्तारादीनां(न्) षट्प्रत्ययान् कथयामीति संबन्धः । ढोष्पस्य रूपाणि ढोष्परूपाणि तेषाम् । गौर्नाम वृत्तं एकाक्षरं तनु(न्)मुषा(खा)नाम् । अध्वनेति सहार्थे तृतीया । मत्ता मात्रा कौट्टुस्तु(म्भ)कं ढोषं ढोसे(सा)मिति नाम्नि छन्दस्काराणां टीकाकृतां च विप्रतिपत्तिरनेका दृश्यते तत्रा(न्ना)भिनिवेष्टव्यं सद्भिः । संस्कृते तावन्नैते दृश्यन्ते । संज्ञायाश्च फलं संज्ञिप्रत्यायण(नं) तच्च मत्तादिरूपेणापि न विरुध्यते । तेनात्राभिनिवेशो निष्प्रयोजन एव । सामुद्गकादीनाम् । सामुद्गकस्येति वक्तव्ये यत्सामुद्गकानामित्युक्तं तदपि न दोषाय । एता जातयो हि वृत्तानाम् । प्रत्येकस्याश्च सहस्रशो भेददृष्टो(ष्टे)र्बहुवचनमपि साधीयः ॥ ४-१२ ॥

गुरूणां लघूनां च भेदादनेकस्य वृत्तजातस्य निवृ(र्वृ)तिरतस्तत्स्वरूपमेव प्रथममाह— **इअराइं** इति ।

**इअराइं जाणं लहुअक्खराइं पाइंतिमेल्लसहिआण ।**
**संजोअपढमदीहरसबिंदुसविसग्गवण्णाण ॥ १३ ॥**

इतराणि जानीहि लघ्वक्षराणि पादान्तिमकसहितेभ्यः ।
संयोगप्रथमदीर्घतरसबिन्दुसविसर्गवर्णेभ्यः ॥ १३ ॥

श्लिष्टानन्तरव्यञ्जनसमुदायः संयोगः प्रक्रमप्रभृतिः । तस्य प्रथमा गुरवः । इन्द्रलध्यादीनां सर्वोदयो(?) यथा । दीर्घा एव दीर्घतराः । स्वार्थे तरप् । आईऊऋएऐओऔ प्रभृतयः । सबिन्दुः प्रसिद्धः कं खं प्रभृतिः । सविसर्गो नः वः । एवंभूतेभ्यो वर्णेभ्यो यानीतराणि तानि लघ्वक्षराणि जानीहि । ननु चाट्ठमे(४·१)त्यादिना अष्टमषोडशयोर्गाथयो(थाया): गुरोर्विधानं न च तदस्यां गाथायां दृश्यत इत्युक्तं पादान्तिकमक(न्तिमक)सहितेभ्य इति । तेन पादान्त(न्ते) संयोगादिव्यतिरिक्तेऽपि अइउऋप्रभृति गुरु एव । अन्तिम एवान्तिमेल्लो । स्वार्थे इल्लप्रत्ययः । पादान्तग्रहणमुपलक्षणम् । अव(र्ध)समस्तवृत्तान्तयोरपि दर्शनात् । केचिदत्राव्याप्त्यतिव्याप्ती उद्भावयन्ति यथा—यदुक्तं संयोगस्य प्रथमगुरुत्वं तन्न सर्वस्यैव संयोगपूर्वस्य, अपि तु तीव्रप्रयत्नसं[यो]गस्य पूर्वस्य । अतीव्रप्रयत्नसंयोगपूर्वस्य लाघवमेव मात्रिकस्य यथा—

तक्खणण्हाणमणहरे तरुणीण तरन्हिल्हसिहसिचयम्मि(?) ।
सहसहयरणमु(गु)णेहि अलआ णिवडंति द्राति सलिलअणा ॥

इति । ण्हाशब्दस्यातीव्रप्रयत्नाद्योयं र(ण)शब्दादकारः पूर्वस्तस्य लघुत्वमेव । तथा न्हिशब्दाद-

---

१ मरीरपानां च AB. २ रासानकानां AB. ३ पूर्वोद्दिष्टानां A. ४ प्रस्तारानिदार्नी A. ५ जाइंण AB.

(दि)कारस्य ल्हशब्दपूर्वस्य । तथा न्तिशब्दादिकारस्य द्रपूर्वस्येति । तस्मादतिव्याप्तिरिति । अन्यं-(न्यच्)च कैश्चिदरस्क(नच्क)हल्पूर्वस्य मातृकस्य गौरवमुक्तं पृथक् पृथगित्यादौ थकारस्य । एतच्चेह नास्तीत्यव्याप्तिः । अत्रोच्यते । यदुक्तं तीव्रप्रयत्नपूर्वस्य गौरवमिति तदभिमतमेव आचार्यस्य । येन रड्डालक्षणे प्रोक्तं च :—'एअंहु[1] मत्तहु अंतिमउ जव्विहि दुव्वहउ भोद्रि । तो तहु णामें रड्डु फुड्डु छंदइ कइअणु भोदि ॥' (४·३१) इति । इह च अनेना[भि]प्रायेण नोक्तम् । तत्कदाचिदस्य लक्षणस्य सामान्यात् संस्कृते भ्रान्तिर्भविष्यति जनानाम् । तस्मान्नातिव्याप्तिः । यच्चोक्तमनच्कहल्पूर्वस्य गौरवं नोक्तं तदप्यसाधु । अनच्कहल्पूर्व[स्य] पादमध्ये तावदसंभवः[2] । यस्मात्तत्रावश्यतया संहिता भवति झगिति वगित्यादिवत् । तस्मान्मध्येऽनच्को न भवति । अन्ते च सत्यपि तस्मिन् [न] प्रयोजनं गौरवातिदेशस्य पादान्तिमकत्वेनैव गतत्वात् । यद्यपि हलोन्तास्थितिर्नाचस्तथाप्यचः प्राधान्यं, यस्माद्गौरवं लाघवं वाचि स्थितं न तु हलि । उक्तं च तैः 'अन्यो वर्णो हलु सं निवे'ति (?) ॥ १३ ॥

एवं गुरुलघुस्वरूपमुक्तम् । इदानीं प्रस्तारे याद्दगनयोः स्वरूपं तथा दर्शयति—कुणसु इति ।

**कुणसु कुडिलोज्जुअग्गं गरुअं अंगुट्ठपव्वपरिमाणं ।**
**लहुअं च उज्जुअं तित्तिएण दइए पमाणेण ॥ १४ ॥**

कुरु कुटिलर्ज्वग्रं गुरुमङ्गुष्ठपर्वपरिमाणम् ।
लघुं चर्जुकं[3] तावतैव दयिते प्रमाणेन ॥ १४ ॥

ऋजु स्पष्टं अग्रं प्रान्तं यस्य तदृज्वग्रम् । कुटिलं वक्रम् । कुटिलं च तदृज्वग्रं कुटिलर्ज्वग्रम् । उदाहरणम् ॥ S ॥ लघु स्पष्टमेव । प्रमाणसंख्यापूर्वत्वमात्रमुभयोरपि स्थितम् । एतदध्वयोग उपयुज्यते लाघवेन । इदानीं अशेषलक्ष्यव्याप्त्यर्थं चतुर्मात्रांशविभागेन विविधसंज्ञाभिश्चेदं प्रकरणमारभ्यते ॥ १४ ॥

तत्र प्रथमं तावदंशविभागमाह—**सव्वंत** इति ।

**सव्वंतमज्झगरुओ पमुहे गरुओ अ सव्वलहुओ अ ।**
**चउमत्तंसो भणिओ पंचविहो छंदआरेहिं ॥ १५ ॥**

सर्वान्तमध्यगुरवः प्रमुखे गुरुस्तथा सर्वलघुश्च ।
चतुर्मात्रांशो भणितः पञ्चविधश्छन्दस्कारैः ॥ १५ ॥

लघुकला मात्रा । चतस्रो मात्रा यस्यादौ(सौ) चतुर्मात्रः । अंशो गण इति पर्यायः । छन्दस्कारैः पिङ्गलादिभिः पञ्चविधः पञ्चप्रकारो भणितः उक्तः । कथमित्याह । सर्वश्चान्तश्च मध्यश्च सर्वान्तमध्याः । सर्वान्तमध्याः गुरवो येषां ते तथा । अन्यच्च । प्रमुख आदौ गुरुर्यस्यासौ प्रमुखगुरुः तथा सर्व-लघुश्च । तेन प्रथमः सर्वलघु(गुरु)र्द्व्यक्षरोन्त्यश्चतुरक्षरः शेषास्त्र्यक्षरा इति । अकारअत्यन्ते (?) । तेषां चाद्यन्तयोर्मध्ये च गुरोरवस्थानात् । शेषं लघुद्वयं स्थितमेव । उदाहरणम् SS; IIS; ISI; SII; IIII. ॥ १५॥

---

१ अहमनुग्रहं अंतिमतं जम्वद्रवहओ भोदि । तोत्तहं णामउरत्वात्तच्छंद कइट्ठा प्रोदि । AB. २ अयं संभवः AB. ३ चार्जवं तावतावपव AB.

पञ्चमात्रस्याह—**पढम** इति ।

**पढमलहू बीअलहू चउत्थगरुओ अ तइअलहुओ अ ।**
**तइअअबीअअगरुआ पमुहगुरू सव्वलहुओ अ ॥ १६ ॥**

प्रथमलघुर्द्वितीयलघुश्चतुर्थगुरुस्तृतीयलघुः ।
तृतीयकद्वितीयकगुरुः प्रमुखगुरुः सर्वलघुकश्च ॥ १६ ॥

अंशः कथित इत्यनुवर्तते। इत्यत्र सर्वत्र बहुव्रीहिः प्रथम(मः) लघुर्यस्येति कृत्वा। एवंविधेष्वष्टसु प्रभेदेषु अन्यमात्राभ्योऽनुत्पत्तेरग्रे च पञ्चमात्रस्यैव संज्ञासमयेऽनुवादात् पञ्चमात्र इत्यत्रार्थाल्लभ्यते। तेन एतदुक्तं भवति। छन्दस्कारैः प्रथमलघ्वादिभेदैरष्टविकल्पः पञ्चमात्रः उक्तः कथित इति। प्रथमगुरुप्रथमलघ्वादीनां अर्थाक्षिप्तं परिशिष्टं लाघवं गौरवं च। अन्यत्स्पष्टम्। एतत् स्पष्टं विस्तारोक्तं इहोक्तं शिष्याणां सुखाय। न ह्याचार्याणां शिष्यहितप्रवृत्तानां तद्विस्पष्टार्थं पुनरुक्तता दोषाय। ते हि परव्युत्पत्तये प्रपन्ना(वृत्ताः) न त्वात्मबोधार्थम्। तस्माद्युक्तमेतत्॥ (ISI; SIS; IIS; SSI; IISI; ISII; SIII; IIIII.) ॥ १६ ॥

इदानीं तेषां संज्ञार्थमाह—**गअरह** इति ।

**गअरहतुरंगपाइक्कजोहनामेहि जाण चउमत्तं ।**
**बहुविविहपहरणाणं [च] पंचमत्तं पिहुलसोणि ॥ १७ ॥**

गजरथतुरङ्गपदातियोधा(ध)नामभिर्जानीहि चतुर्मात्रम् ।
बहुविविधप्रहरणानां च पञ्चमात्रं पृथुलश्रोणि ॥ १७ ॥

हे विस्तीर्णकटि चतुर्मात्रं गजादीनां यानि मातङ्गवारणादीनि [नामानि] तैरुपलक्षितं जानीहि पञ्चमात्रो(त्रं) गणं बहूनामनेकेषां विविधानां च नानासंज्ञोपलक्षितानां प्रहरणानां नामभिरुपलक्षितम्। चतुर्मात्रं पञ्चमात्रं चेत्येकवचनेन जातिमात्रं [लक्ष्यते]। प्रयाणा(प्रयोगे?) लक्ष्ये च तथा दृष्टेरग्रे च विशेषसंज्ञाभिधानात् यथासंख्ये मतिर्न विधेया॥ १७॥

विशेषसंज्ञार्थमाह—**कण्ण(न्न)कर** इति ।

**कन्नकरपओहरचलणविप्पसन्नाइं जाणसु इमाइं ।**
**अन्नाइं वि चउमत्तंसआण दइए जहासंखं ॥ १८ ॥**
**गुरुजुव कण्णं गुरुअंत करअलं पउहरं च गुरुमज्झं ।**
**आइगुरुणा अ चलणं विप्पं सव्वत्त लहुएहिं ॥ १९ ॥ ***

कर्णकरपयोधरचरणविप्रनामानि जानीहि इमानि ।
अन्यान्यपि चतुर्मात्रांशकानां दयिते यथासंख्यात्(ख्यम्) ॥ १८ ॥
[ गुरुयुगं कर्णं गुर्वन्तं करतलं पयोधरं च गुरुमध्यम् ।
आदिगुरुणा च चरणं विप्रं सर्वत्र लघुकैः ॥ १९ ॥]

१ संपत्तेर्लघुश्च AB. २ पंचमः AB. ३ पुनरुक्तस्थाया AB. ४ A drops उपलक्षितं to नानासंज्ञो (in next line).
* Com. drops Sanskrit rendering of this stanza. The translation given here is by the editor.

हे दयिते प्रिये चतुर्मात्रांशकानां अन्यान्यपि कर्णादीनां संबन्धेऽत्र श्रवणादिरूपादिणि(दीनि) यथासंख्यं नामानि जानीहि। तेनैतदुक्तं भवति द्विगुरुः कर्णोऽन्तगुरुः करो मध्यगुरुः पयोधरः आदिगुरुः चरणः सर्वलघुर्विप्र इति ॥ १८-१९॥

इदानीं परमतेन संज्ञान्तरमाह गणविशेषस्य—**एआणमिति**।

**एआणं चिअ मज्झे गुरुमज्झंसरस जाण अण्णं पि।**
**आअरणिरूविअं सण्णअंगि नामं नरेंदोत्ति ॥ २०॥**
**ठाणट्ठिओ पसोहइ ठाणअरहिओवि जेण विनडेइ।**
**मज्जाअं पि न लंघइ तेण गुरु(रू)मज्झओ राआ ॥ २१॥**
**सामण्णेहिं पउज्जइ चउमत्तो जत्थ सुअणु नामेहिं ।**
**तत्थ नरेंदो न निउज्जइत्ति भणिअं विसहरेहिं ॥ २२॥**

**एतेषामेव मध्ये गुरुमध्योय(ध्यांश)स्य जानीह्यन्यदपि।**
**आदरनिरूपितं सम्म(न्न)ताङ्गि नाम नरेन्द्र इति ॥ २०॥**
**स्थानस्थितः प्रसाधयति स्थानाद्रहितो[पि] येन विकोट(प)यति।**
**मर्यादेव जातीस्तेन गुरुमध्यमो राजा ॥ २१॥**
**सामान्यैः प्रयुज्यते चतुर्मात्रः सुतनु यत्र नामभिः।**
**तत्र नरेन्द्रो न नियुज्यते इति भणितं विषधराभ्याम् ॥ २२॥**

इति इत्थंप्रकारो गाथातृ(त्रि)तयस्यार्थ उक्तो भणितो विषधराभ्यां कम्बलाश्वतराभ्यां हे सुतनु जानीहि। एतेषां नामैव (म्नैवं) पूर्वोक्तानां मध्ये यो गुरुमध्यांशो गणस्तस्य नरेन्द्र इति नामान्यदपि निरूपितं आदरेण अतिशयेन विषधराभ्यामेव हे सन्नताङ्गि ललितगात्रलते। कस्मात्ताभ्यामादरेण निरूपितमित्याह—**स्थानस्थित** इति। यस्मादयं मध्यगुरुः स्थाने गाथादीनां षष्ठाद्ये प्रदेशे स्थितो निविष्टः संप्रसाधयति तत्सकलमेव वृत्तं भूषयति विशिष्टरचनात्वाद्येन क(का)रणेन तेन गुरुमध्यमो राजा। येन च कारणेन तस्मादेव विहितात्स्थानाद्रहितो भ्रष्टस्तदेव वृत्तं विकोपयति विनाशयति तथापि गुरुमध्यमो राजा। मर्यादेवेति दृष्टान्तो यथा मया(र्या)[दा] ब्राह्मणादीनां जातीनां यथोचिते स्थाने स्थितास्ता भूषयति तस्माच्युता विकटयति तद्वदयमपि। अतएव राजा। राजा हि स्थाने शास्त्रोचिते स्थितो वर्णं (र्णान्) भूषयति सम्यक्पालनात्। तस्मादेव च्युतस्तान्विस्रं[३]स्तीकरोति। किंच सामान्यैर्नामभिर्यस्मिन्वृत्तविशेषे चतुर्मात्रः प्रयुज्यते विधीयते तत्र तन्मध्ये नरेन्द्रो [न] विधीयते राजत्वादेव। राजा हि सामान्यमनु[४]ष्यमध्ये [न] गण्यते इति। किमृध (किं मुधा) मतोपन्यसनस्य तस (तस्य) फलमित्युच्यते। अनेन दर्शयति न किंचिन्मयेह स्वबुद्धिविरचितं विनद्धं न (?)। किं तर्हि अनेकशास्त्राणामेकदेशत्वाद्यथास्थितवस्तुसंग्रहेणैतच्छास्त्रं मया विरचितम्। सकललक्ष्यव्यापकं(क)संज्ञाः सर्वाश्च संकेतेन क्रियन्ते तास्वपि पारतन्त्र्यमस्य। अन्यच्च विषधरौ उपहासायोपन्यस्तौ। अंशकविशेषस्य संज्ञामात्रेण प्रयोजनं तच्च गाथापादमात्रेण सिध्यति तत्किमनेन वृथा हंत (हेतु) विशेषणादि-

१ Com. seems to read मज्जाआ विअ जाईण तेण गुरुमज्झिमो राआ. २ ध्यानाद्रहिताध्यानाद्रहितो AB. ३ स्मां विसंम्स्वीकरोति AB. ४ मनूष AB.

प्रयासेनेति । अतएव सत्स्वप्यन्यशास्त्रेषु तेषां वृथाविस्तरत्वादव्याप्तेश्चानेन निबद्धमिदमिति ॥२०-२२॥

यदुक्तं सामान्येन प्रयोगो यत्र तत्र नरेन्द्रस्य [न] विधानमिति तस्यापवादमाह— **गाहाखंधअ** इति।

**गाहाखंधअगीईउवगीईगीइआण अ नरिंदो ।**
**चउमत्तंसअगणणागओवि विसमे ण ठाणम्मि ॥ २३ ॥**

गाथास्कन्धकगीत्युपगीतिकानां नरेन्द्रः ।
चतुर्मात्रांशकगणनागतोऽपि विषमे न स्थाने ॥ २३ ॥

अयं मध्यगुरुः गाथादीनां चतुर्मात्रगणनामध्यपतितोऽपि सामान्यसंज्ञा(ज्ञ)या विषमे स्थाने न विधेयः । विषमं यस्मादर्थे गीतिकासम्यग्भागो न लभ्यते(?) प्रथमतृतीयपञ्चमादि । पूर्वमेव प्रतिषिद्धस्यास्य वचनं समस्थाना(ने) विध्यर्थम् ॥ २३ ॥

उप(व)गीइ इति ।

**उवगीइ(ई)रहिआण अ छट्ठे ठाणम्मि दिज्जएँ दिओवि ।**
**एआणं चिअ वसुहाहिवस्स दइए अलाहम्मि ॥ २४ ॥**

उपगीतिरहितानां षष्ठे स्थाने दीयते द्विजोपि ।
एतेषामपि वसुधाधिपस्य दयितेऽलाभे ॥ २४ ॥

एतेषां गाथादीनां षष्ठे स्थानेऽवश्यं दीयते उपगीतिवर्जितानाम् । उपगीत्यां ति(हि) षष्ठे लघोर्विधानात् । तस्मिंश्च तेषां द्विजोऽपि दीयते सर्वलघुरपि दीयते सर्वलघुरपि क्रियते । तेन द्वयो-वध(रेव?) विधानाद् द्विप्रभेदं तत्स्थानमिति ॥ २४ ॥

अस्मिन् सर्वलघौ षष्ठे सति विशेषमाह—**छट्ठट्ठिअ** इति ।

**छट्ठट्ठिअविप्पवरे पढमे वण्णम्मि कुणसु निच्चंवअं[1] ।**
**अह पंचमेवि बीए तो से परिहरसु सुहवन्नं ॥ २५ ॥**

षष्ठस्थितविप्रवरे प्रथमे वर्णे कुरु नित्यपदम् ।
अथ पञ्चमेऽपि द्वितीये ततोऽस्य परिहर सुष(ख)वर्णम् ॥ २५ ॥

एतेयौ(एतयोः) यदा षष्ठ(ष्ठे) विप्रवरो हयति (भवति) तदास्य प्रथमे वर्णे कुरु नित्य-पदं अवश्यतया तत्र पदसमाप्तिर्विधेया । चत्वारो वर्णाः साकल्येन तावत्तस्मिन् संभवन्ति । तत्र प्रथमे विच्छेदो विधेयः। यथा इह 'म्मि कुणसु' इति विप्रे सप्तम्यन्तस्य पदस्य विधानं दर्शितम्। अथवा द्वितीयेऽथ यदि पञ्चमस्थाने स्थितो भवति ततोऽस्य प्रवरवर्णं पूर्वपदेन सह वर्जयेत् । एतदुक्तं भवति । चतुर्थगणस्यान्ते[2] पदसमाप्तिः कार्या द्विजे पञ्चमे सति । अनन्तरं पञ्चमे प्रथमपादे च (?) पदमारब्धव्यम् । इह यथा 'तो से' इति चतुर्थे गणे समाप्ते 'परिहर' इति पञ्चमे पदस्यारब्धिर्दर्शिता ॥ २५ ॥

---

१ निच्चयनिवअं AB. २ गणपदस्यान्तसमाप्तिः AB.

पूर्वोक्तसामान्यवाक्यस्यापवादमाह—अवि(हि)अक्खर इति ।

अहिअक्खरनिव्वाइअवाणासिअसीसआण अ नरिंदो ।
न विरुज्झइ निच्चं चिअ दइए विसमेसु ठाणेसु ॥ २६ ॥

अधिकाक्षरानिर्वापितावानवासि[का]शीर्षकानां नरेन्द्रः ।
न विरुध्यते नित्यमेव दयिते विषमेसु स्थानेषु ॥ २६ ॥

अधिकाक्षरादीनां नित्यमेव नरेन्द्रो विषमेषु स्थानेषु न विरुध्यते । स्पष्टमन्यत् ॥ २६ ॥

पञ्चमात्रस्य विशेषसंज्ञामाह—जाणअ(सु) अ इति ।

जाणसु अ जहासंखं सुरगअगरुलह(भु)अइंदनामेहिं ।
तिण्णिवि विरामगरुआ छाओअरि पंचमत्तंसे ॥ २७ ॥

जानीहि यथासंख्यं सुरगजगरुडभुजगेन्द्रनामभिः ।
त्रीनपि विरामगुरूंश्छातोदरि पञ्चमात्रांशान् ॥ २७ ॥

पञ्चमा[त्रा]नां(णां) यः (ये) प्रथमलघ्वादयस्त्रयो विरामगुरवो यथासंख्यं क्रमेण सुरगजादीनां संज्ञाभिरुपलक्षिता इति जानीहि । तेनादिलघुः सुरगजस्य नामभिरैरावतादिभिर्मध्यलघुर्गरुडस्य नामभिर्वैनतेयादिभिः अन्तगुरुर्भुजगेन्द्रनामभिः फणिविषधरादिभिरिति ॥ २७ ॥

कवयोर्गुरुर्वर्णयोः (?) संज्ञार्थमाह—गुरुअक्खरं इति ।

गुरुअक्खरं विआणसु मणिरअणाहरणचमरणामेहिं ।
धअवट्टकरलिआणं अंतेगरुअं[2] तिमत्तं च ॥ २८ ॥

गुर्वक्षरं विजानीहि मणिरत्नाभरणचमरनामभिः ।
ध्वजपटकदलिकादिभिरन्तगुरुं त्रिमात्रं च ॥ २८ ॥

मण्यादीनां नामभिर्गुर्वक्षरं विजानीहि त्रिमात्रं चान्तगुरुं ध्वजपटस्य कदलिकायाश्च नामभिरिति । त्रिमात्रस्य तावत् त्रयो भेदा अन्तगुर्वादिगुरुलघुत्रयस्वरूपाः । तन्मध्यादन्तगुरोः संज्ञेयम् ॥ २८ ॥

किंच तूरविसेसा इति ।

तूरविसेसा तिलहुअगणस्स; दुलहुअगणस्स रसभावा ।
लहुअस्स वि सद्दफरिसं[3] [स] रूवगंधाइं नामाइं ॥ २९ ॥

तूर्यविशेषाः त्रिलघुगणस्य[4] द्विलघुगणस्य रसभावौ[5] ।
लघोः शब्दस्पर्शस्वरूपगन्धानां नामानि ॥ २९ ॥

त्रिलघुगणस्य तूर्यविशेषाणां संबन्धे पटहादीनि नामानि जानीहि । तथा द्विलघुगणस्य रसभावौ स्वरूपेणैव न तु संज्ञिभिः । लघोस्तु शब्दाद्याः सविशेषाः (?) ॥ २९ ॥

वृत्तविशेषाणां सामान्यविधाने[6] केषु गणेषु प्राप्तेषु येनाधिकचारुता भवति तद्विधानार्थमाह—

---

१ नरपतिः AB. २ अंतेगुरूअं A. ३ फरिसरसरूवसद्दगंधाइं A; फरिसरूवसद्दगंधाइं B. ४ त्रिलघुसाम्यात् AB. ५ रसभावात् AB. ६ सामान्यविधावने AB.

[**अहिअक्खरेति**]।

**निव्वाइअअहिअक्खरगणसमदुवईण सीसआणं च।**
**मज्झलहुचउत्थगुरू अ गीइआणं वि हि[अ] अंसा ॥ ३० ॥**

**अधिकाक्षरानिर्वापितागणसमद्विपदीनां शीर्षकाणां च।**
**मध्यलघुश्चतुर्थगुरुश्च गीतिकानां च हितावंशौ ॥ ३० ॥**

अधिकाक्षरादीनां वृत्तजातीनां तथा निर्वापितानां गणसमानां च सप्तानां द्विपदीनां शीर्षकानां तथा मध्यमलघुश्चतुर्थगुरुश्चेति हितावंशौ लालित्योत्पादनात्। गीतिकानां च तथा हि तावेव ॥ ३० ॥

गणसमानां विधानान्तरमाह—**एकदुव(म)त्त** इति।

**एक्कदुमत्तब्भहिओ हीणोवि पसंसिओ विसहरेहि।**
**पाओ सत्तन्ह वि गणसमाण दुवईण पसअच्छि ॥ ३१ ॥**

**एकद्विमात्राभ्यधिको हीनश्च कथितो विषधराभ्याम्।**
**पादः सप्तानामपि गणसमानां द्विपदीनां प्रसृताक्षि ॥ ३१ ॥**

तिवासरूप (?) विषधराभ्यां पादः सप्तानामपि गणसमानां एकया मात्रया हीनो न्यूनः प्रशस्तोऽङ्गीकृतः अभ्यधिकयाप्यङ्गीकृत एव। एवं द्वाभ्यामपि मात्राभ्यां हीनाधिकत्वेङ्गीकृते गुरुलघुविन्यासे पदच्छेदयतीनां सर्वथाभावह(वत्)त्वं प्रयोजनम्। तत् यदि हीनाधिकत्वेप्यासां शोभा न हीयते तत्का क्षतिरिति ॥ ३१ ॥

संज्ञान्तरार्थमाह—**समर** इति।

**समरं समोत्ति अ समे विसमम्मि अ सायरोत्ति विसमोत्ति।**
**पाओ गणोव्व ठाणो भण्णइए सुअणु वित्ताण ॥ ३२ ॥**

**समरः सम इति [च] समे विषमे च सागर इति विषम इति।**
**पादो गणो वा स्थानं भण्यते सुतनु वृत्तानाम् ॥ ३२ ॥**

समे प्रदेशे पादो वा चतुर्मात्रादिगणो वा स्थानं द्विचतुर्थादि समर इति भण्यते। किमियं संज्ञा पर्यायरूपेण आहोस्विद्विशेषेण रूपेण स्थितेत्युच्यते। नापवादरूपेण किं तर्हि सम इति भण्यते। विषमे प्रदेशे पादादीनां सागरसंज्ञा विषमसंज्ञा चेति द्वयं विहितम्। अन्ये त्वाहुः। हे असमे प्रिये न विद्यते समास्या इति कृत्वा। समरः सम इति भण्यते। तद्वच्च विषमोक्ते विषमा अनन्यसदृशा उक्तयो यस्या इति कृत्वा। विषमे सागर इति भण्यते। युज्यत एतत्। पण्डितानां तु मनांसि नात्यावर्जयति। प्रसिद्धस्य प्रथ[म]मुपदेशो युक्तः पश्चाद्विधेयस्येति। तथा योयं देवदत्त इति प्रसिद्धस्तस्याद्यप्रकृ(भृ)तिरर्धं (?) इति नामास्त्विति। इह तु समः प्रसिद्धः। योसौ सम इति भण्यते तस्य समर इति नामास्तु इति प्राप्ते कथं विपर्ययो रञ्जयति विदग्धचेतांसि। अस्माभिस्तु द्वयमपि दर्शितम् ॥ ३२ ॥

१ अहिअक्खरनिव्वाइअ Com. २ विअ हिअंसा A. ३ विषमे दश सागर इति विशेषम इति AB. ४ सुरेवो AB.

चतुर्मात्रपञ्चमात्राणां महासामान्यसंज्ञार्थमाह—मंतित्ति ।

मंतित्ति भण्णई जहिं पुरोहिओत्ति अ निजुज्जए जम्मि ।
चउमत्तपंचमत्ताण दोण्ह[1] जोच्चेअ पडिहाइ ॥ ३३ ॥

इअ कइसिट्ठविरइए वित्तजाईसमुच्चए पढमो नियमो समत्तो ।

मन्त्रीति भण्यते यत्र पुरोहित इति नियुज्यते योऽपि ।
चतुर्मात्रपञ्चमात्रयोर्द्वयोर्य एव प्रतिभाति ॥ ३३ ॥

यत्र मन्त्रीति भण्यते यत्र च नियुज्यते[2] पुरोहित इति तत्र चतुर्मात्रपञ्चमात्रयोर्मध्याद्य एव प्रतिभाति स एव क्रियत इति शेषः । तेन त्रयोदशभेदा अस्मिन् संज्ञाद्वये प्रतिष्ठिता इति ॥ ३३ ॥

इति प्रथमो नियमः ।



१ दोण्हा दोच्चेअ AB. २ न युज्यते AB.

# द्वितीयो नियमः ।

इदानीं पादकल्पनया द्विपद्यादीनां सामान्यलक्षणमभिधीयते—**कीरइ** इति ।

**कीरइ गणेहि पाओ पाआ चत्तारि वत्थुअं भणियं ।**
**चत्तारि सगीइअवत्थुआइं दुवइत्ति निद्दिट्ठा ॥ १ ॥**

**क्रियते गणैः पादः पादाश्चत्वारो वस्तुकं भणितम् ।**
**चत्वारि सगीतिकवस्तुकानि द्विपदीति निर्दिष्टा ॥ १ ॥**

सामान्येन तावदेवंविधा द्विपदी निर्दिष्टा कथिता । गणैश्चतुर्मात्रैः पञ्चमात्रैर्वा वक्ष्यमाणरचनया पादः क्रियते 'कुण करकण्ण' (३·१) इत्यादिकया । ते च पादाश्चत्वारो [वस्तुकं] भणितमुक्तमाचार्यैः । सह गीतिकया वर्तन्ते सगीतिकानि । सगीतिकानि च तानि वस्तुकानि सगीतिकवस्तुकानि चत्वारि द्विपदीति निर्दिष्टा । एतदुक्तं भवति । वस्तुकस्यान्ते प्रत्येकशो गीतिका कार्या ॥ १ ॥

अस्मिन्नेवावसरे गीतिकालक्षणमुच्यते **तइअ** इति ।

**तइअधणु मणिविरमअं सत्तमसरछट्ठराअविप्पअं च ।**
**परिसेसनिहिअजोहअं गीइअ पुव्वद्धपच्छिमद्धअं च ॥ २ ॥** गीतिका

**तृतीयकधनुर्म[णि]विरामं सप्तमशरषष्ठराजविप्रं च ।**
**परिशेष[1]निहितयोधं गीतेः[2] पूर्वार्धपश्चिमार्धं च ॥ २ ॥**

पूर्वार्धं पश्चिमार्धं च पूर्वार्धपश्चिमार्धमित्येकवद्भावः । उद्गीतिकासंबद्धोऽयं विधिलक्षणे भवतीति विशेषः (?)। कीदृशमित्युच्यते तृतीयं धनुर्यस्मिंस्तत्तृतीयधनुः। 'बहुविविहपहरणाणं' (१·१७) इत्यादिना पञ्चमात्रस्य धनुरिति संज्ञा । तत्र सामान्येन पञ्चमात्रेषु प्राप्तेषु 'णिव्वाविअअहिअक्खर' (१·२०) इत्यादिना मध्यगुरो(लघो)श्चतुर्थगुरोश्च द्वयोरेव गीतिकायां प्राप्तिः । किं च माणिर्विरामो यस्य तन्मणिविरामो(मम्) । राजा च विप्रश्च राजविप्रौ मध्यगुरुचतुर्लघू षष्ठौ यस्य तत् षष्ठराजविप्रकम् । सप्तमः शरः पञ्चमात्रो यस्य तत् सप्तमशरं सप्तमशरं च तत्षष्ठराजविप्रं सप्तमशरषष्ठराजविप्रम् । षष्ठे राजविप्रयोः पर्यायेणावस्थानम् । अन्यच्च । परिशेषाः तृतीयपञ्चमषष्ठसप्तमेभ्यो, योधाश्चतुर्मात्राः सामान्येन मध्यगुरोर्वर्जिताः यस्य तदेवंभूतगीतिकाया अर्धद्वयलक्षणं भवति ॥ २ ॥

अन्यच्च यादृग्रूपं गीतिकाया लक्ष्ये दृश्यते तदपि दर्शयितुमाह—**विअअ** इति ।

**वीअ[3]चउत्थेसु सरो पंचमपढमेसु सत्तिदंडो अ ।**
**भणिएसु रहेसुवि गीइआइ ठाणेसु अविरुद्धा ॥ ३ ॥**

**[द्वितीय]चतुर्थयोः शरः पञ्चमप्रथमयोः शक्तिदण्डश्च ।**
**भणितेषु[4] रथेष्वपि गीतिकायाः स्थानेष्वविरुद्धौ ॥ ३ ॥**

गीतिकायाः स्थानेषु द्वितीयादिषु रथेष्वपि भणितं रुच्यन्ते (?) । तत्र द्वितीये चतुर्थे

---

१ परिसेलनिखिलयोवं AB. २ गीतिर्वा पूर्वा० AB. ३ विअअ Com. ४ भणितेष्वपि रथे० AB.

च रथस्थानेऽपि शरो न विरुध्यते । तथैव पञ्चमप्रथमयोरपि शक्तिदण्डः पञ्चमात्रः । एतदुक्तं भवति । गीतिकायास्त्रयो भेदाः । एकः द्वितीयचतुर्थशरः स्यात् । द्वितीयः [तृतीयसप्तमशरः] । तृतीयः पञ्चमप्रथमशरश्चेति । अत्र वैमं(चैवं) विनियमयन्ति । तृतीयादीनां पञ्चमात्रादीनां सप्तमादिर्यथोक्तेव(क्त एव) सहयोगे भवति नान्यथेति । तेन यदा तृतीयः पञ्चमात्रस्तदा सप्तमे, यदा द्वितीयः तदा चतुर्थे, यदा पञ्चमे तदा प्रथम इति । एतदभिमतमध्वादीनाम् (?) । विपर्ययोऽपि तैरिष्यत एवेति ॥ ३ ॥

सामान्यलक्षणस्यैव द्विपद्या विशेषान्तरमाह—**वत्थुअ** इति ।

**वत्थुअगीइअमज्झे वेआरी एक्कअं दुवहअं च ।**
**वित्थारिअअं च कईहि कीरए सुअणु इच्छाए[1] ॥ ४ ॥**

**वस्तुकगीतिकामध्ये विचार्यैककं द्विपथकं वा ।**
**विस्तारितकं च कविभिः क्रियन्ते [सुतनु इच्छया] ॥ ४ ॥**

वस्तुकस्य गीतिकायाश्चान्तराले कदाचिद्विदारी कदाचिदेककं कदाचिद् द्विपथकं कदाचिच्च विस्तारितकमित्येके । एकं वा द्वौ वा त्रीणि वा सर्वं एवेत्यपरे । अस्माकं तु[2] मतं वस्तुकस्य गुरुलाघववशेन यथा लालित्यं भवति तथा विचार्यादीनां रचना विधेयेति ॥ ४ ॥

एतेषां लक्षणान्याह—**जा वत्थुआइ** इति ।

**जा वत्थुआइ लहुई सा वेआरित्ति भणिआ छंदे ।**
**दो पाआ भण्णइ दुवहउत्ति तह एक्कअं एक्को ॥ ५ ॥**

**या वस्तुकाल्लघ्वी सा विदारी संज्ञिता छन्दसि ।**
**द्वौ पादौ भण्यते द्विपथकमिति तथैककमेकः ॥ ५ ॥**

तस्य विदारीति छन्दःशास्त्रे संज्ञा कृता या वस्तुकाल्लघ्वी । लाघवमत्र गणकृतमिति केचित् । एतदुक्तं भवति । यदा पञ्चभिर्गणैर्वस्तुको भवति तदा त्रिभिश्चतुर्भिर्वा विदारी विधेया । अपरे पादकृतमिच्छन्ति । त्रिभिः पादैर्विचारी भवति । द्विपथैकके यथासंख्यं द्वाभ्यामेकेन च वचने (पादेन ?) भवतः ॥ ५ ॥

विस्तारितकस्येत्याह—**दुवईण** इति ।

**दुवईण जाँ[3] ण च्छंदे सारिच्छं वहइ जं च दुअईण ।**
**महुरं च कई(इ)अएहिं वित्थारिअअंति तं जाण ॥ ६ ॥**

**द्विपथादीनां[4] यत्र च्छन्दसि सादृश्यं वहति[5] यच्च द्विपदीनाम् ।**
**मधुरं च कृतकैर्विस्तारितमिति तज्जानीहि ॥ ६ ॥**

त्वं विस्तारितकमिति बुध्यस्व यच्छन्दसि सादृश्यं वहति द्विपदीनां च न वहति च ।

---

१ Both A and B add तह अ before इच्छाए. २ अस्मात्कर्तुमतं AB. ३ जो ण छंदो A. ४ द्वितीयादीनां AB. ५ वेहयति AB.

तद्वस्तु[१]कस्य सादृश्यं परिर्बन्धाद्वहति केनचिद्भेदान्तरेण न वहति। यथा सुमनसः पादः त्रिभिश्चतुर्मात्रैर्गुरुणा च निबद्धः ध्वजाग्रं च तस्मिन् विगुर्वगुरुभ्यां (द्विगुर्वन्तगुरुभ्यां ?) विहितं हीनं तस्मिन्यदि द्वौ दृश्यते तदा तत्सादृश्यं वहति न वहति चेति केचित्। अन्येषां मतम्। अंशकेन वा संकरे यच्च[२] वस्तु[२]कान्न्यूनं भवतीति। एकेन द्वाभ्यां त्रिभिर्वा पादैस्तद्विधीयत इत्यपरे। ननु चैतस्मिन्सति विचार्यादिभिर्न भिद्यते। कक्कतपात्रकृतोऽत्र भेदः। सर्वं चैतदभिमतमाचार्याणाम्। तथा चोक्तम्—

'विस्तारो वस्तुकस्यार्धं पादे(दो) या(वा) वस्तुकल्पकः।
रूपकं वस्तुकभवं स्वल्पं तस्याथवा दलम्॥'

इति। किं च कक्कतकैर्मधुरमिति। अस्मिन्विस्तारिते माधुर्यार्थं कृतककक्काररचना कार्या। यदपि कं वस्तु सन्ददाति लालित्यमात्रं, कथं तत्कृतकमुच्यते कश्चासौ कृतकश्चेति। यथा कामो कामते चन्द्रश्चन्द[ति] इति॥ ६॥

विशेषान्तरमाह—**जा अवलंबए** इति।

**जा अवलंबइ चउवत्थुआण अत्थं पुणो पुणो भणिआ।**
**वेआरिच्चिअ सा विसहरेहि धुवइत्ति निद्दिट्ठा॥ ७॥**

**या अवलम्बते चतुर्वस्तुकानां अर्थं पुनः पुनः पुनर्भणिता।**
**विचार्यैवासौ विषधराभ्यां ध्रुवकेति निर्दिष्टा॥ ७॥**

सा विषधराभ्यां नागाभ्यां ध्रुवका कथिता विचार्यैव सती। ननु किं नामान्तरकरणेन। अतो विशेष उच्यते। या पुनरुक्तापि सती चतुर्णां वस्तुकाना[३]मर्थमवलम्बते वस्तु चेद्वस्तुनि बध्यते तस्मिन्वस्तुनि वाक्यस्यैव क्रियापदं ध्रुवका कार्या। एवं द्वितीयादीनामिति केचित्। अन्ये त्वाहुः। यमकवच्चतुरुक्तमपि न पौ[न]रुक्त्यमावहति। प्रत्येकं वस्तु[क]स्यानुगामित्वात्। एतदुक्तं भवति। गणैः पादैश्च विदार्याः सादृश्यं वहति। इयांस्तु विशेषो ध्रुवकायमर्थरूपाः (ध्रुवकेयमर्थरूपा ?)। इदमेक(वा)स्माकमभिमतम्॥ ७॥

अस्यां सत्यां यथा द्विपद्या रूपं भवति तथाह—**भुअआहिव** इति।

**भु[४]अआहिवसालाहणवुड्ढकइनिरूविअं इमं दइए।**
**णिहणणिरूविअधुवअम्मि वत्थुए गीइआ णत्थि॥ ८॥**

**भुजगाधिपसातवाहण(न)वृद्धकविनिरूपितं दयिते।**
**निधननिरू[५]पितध्रुवके वस्तुनि गीतिका नास्ति॥ ८॥**

यद्य(त्र) वस्तुकस्य निधने ध्रुवका निरूपिता तत्र गीतिका न विधेया इति भुजगाधिपादीनां मतम्। यस्मादेवं रचना स्थिता—प्रथमं वस्तुकं पश्चाद्विदार्यादीनामन्यतममन्ते च गीतिकेति।

---

१ वस्तुकस्यासादृश्योपरि॰ AB. २ यद्वयस्तुकात्॰ AB. ३ वस्तुकानामनामर्थ॰ AB. ४ v. 8 missing in B.
५ निधनं निरूपिता ध्रुवके AB.

ध्रुवकान्ते वस्तुकान्ते गीतिका नाभिमता आचार्याणाम्[1]। भुजगाधिपौ कम्बलाश्वतरौ। सातवाहनो राजा। वृद्धकविर्हरिवृद्ध इति केचित्। बहूनामुपादानं विकल्पनिवृत्यर्थम्। विदार्यादीनि तावदवश्यं- तथा (नावश्यतया ?) क्रियन्ते किं तर्हि बन्धवशाद्वस्तुवशाच्चेति निर्णीतम ॥ ८ ॥

**भुअआहिव** इति।

**भुअआहिवसालाहणवुड्ढकइनिरूविआण दुवईण।**
**णामाइं जाइं साहेमि तुज्झ ताइं विअ कमेण ॥ ९ ॥**

भुजगाधिपसातवाहन(न)वृद्धकविनिरूपितानां द्विपदीनाम्।
नामानि यानि साधयामि तव तान्येव क्रमेण ॥ ९ ॥

भुजगाधिपादिनिरूपितानामित्यनेनैतद्दर्शयति या विषमद्विपद्यः इदानींतनैः कथितास्तासां[2] लक्षणं नेहोच्यते। साधयामि कथयामि।

तान्याह—**सुमना** इति।

**सुमणा तारा जोण्हा मणोवई कोमुई पगीआ अ।**
**रत्ता अ माणिणी अच्छरा अ तह पउमिणी विज्जू ॥ १० ॥**
**विणया सरस्सई सुप्पहा विहूई सुमंगला चंदा।**
**विअआ महामई णंदिणी सिरी चंदकंता अ ॥ ११ ॥**
**हंसी पच्छा रइआ सुम्मा सामा विलासिणी लच्छी।**
**मेहा अस्सक्कंता सुसंगआ मालई दूई ॥ १२ ॥**
**वणराई वंसत्था ससिवअणा रअणमाला अ।**
**सत्तत्तीसा[3] एआ जाणह मत्तागणसमाओ ॥ १३ ॥**

सुमनास्तारा ज्योत्स्ना मनोवती कौमुदी प्रगीता च।
रक्ता च मानिन्यप्सराश्च तथा पद्मिनी विद्युत् ॥ १० ॥
विनता सरस्वती सुप्रभा विभूतिः सुमङ्गला चन्द्रा।
विजया प्रभावती नन्दिनी श्रीश्चन्द्रकान्ता च ॥ ११ ॥
हंसी पथ्या रचिता सौम्या श्यामा विलासिनी लक्ष्मीः।
मेधाश्वक्रान्ता सुसंगता मालती द्रुतिका ॥ १२ ॥
वनराजिर्वंशस्था शशिवदना रत्नमाला च।
सप्तत्रिंशच्चैता जानीहि मात्रागणसमाः ॥ १३ ॥

एतासां सर्वपादेषु प्रथमपादसदृशा मात्रा गणाश्च [इति] जानीहि ॥ १३ ॥

**चिंता[4] सिद्धी भद्दा गंधारी मालिणी तहा कंदू।**
**ललिआइ समं सत्तवि इमाउ दइए गणसमाओ ॥ १४ ॥**

---

१ आचार्याणां तु AB. २ तासु लक्षणमिहोच्यते AB. ३ Both A and B read दीहधवलच्छि at the beginning of this line. ४ चित्रा Com.

चित्रा सिद्धिर्भद्रा गान्धारी मालिनी तथा कद्रूः ।
ललितया समं सख्याप्येता दयिते गणसमाः ॥ १४ ॥

चित्राद्या गणैरेवं[1] समसंख्यैर्युक्ता न मात्राभिर्यथा तथा तदवसर एव वक्ष्यामः ॥ १४ ॥

किंच ।

**विउला चवला सुमुही अ सारसी भामिणी पसण्णा अ ।**
**नंदा सेआ अ पिए अद्धसमाओ इमा अट्ठ ॥ १५ ॥**

विपुला चपला सुमुखी च सारि(र)सी भामिनी प्रप(स)न्ना [च] ।
नन्दा श्वेता च प्रिये अर्धसमा एता अष्टौ ॥ १५ ॥

एतासां प्रथमस्तृतीयेन सदृशः द्वितीयेन चतुर्थः पादः ॥ १५ ॥

किंच विषमेति ।

**विसमा तणुमज्झा कोवणा अ णट्टी अ विस्सरूआ अ ।**
**अविसिट्ठलक्खणाओ एआओ मए ण भणिआओ ॥ १६ ॥**

**उद्देसलक्खणणामाई(इं) दुवईण । इअ कइसिट्ठविंत्तजाईसमुच्चये विइओ नियमो सम्मत्तो ॥ २ ॥**

विषमा तनुमध्या कोपना च नटी च बिम्बरूपा च ।
अविशिष्टलक्षणा एता मया न भणिताः ॥ १६ ॥

एता विषमाद्या न मयोक्ताः कस्मादविशिष्टलक्षणतया निःफलत्वात् । किमेतासां लक्षणेन प्रयोजनमललितरचना महाकविभिर्बहिष्कृता ह्येताः[2] । अत एव मया न भणिताः । एतदर्थमेत्र आचार्येणादावेवोपयोगष्कृतो (?) यथा भुजगाधिपादिभिर्निरूपितानां वक्ष्यामीति । ननु यद्येता नोच्यन्ते तर्त्कि नांमग्रहणेनेत्युच्यते । अव्याप्तिपरिहारार्थमिति ॥ १६ ॥

## इति द्वितीयो नियमः ।

---

१ गणेनेव AB. २ The last line i. e. एता to निःफलत्वात् repeated after ह्येताः in A and B.

# तृतीयो नियमः ।

इदानीं द्विपदीवस्तुकानां सोदाहरणं [लक्षणं] यथोपदेशमुच्यते । **कुण कर** इति ।

**कुण करकण्णविवज्जिअअं**
**दुण्ह गआण तुरंगमअं ।**
**पुरओ चारु सचामरअं**
**सुमणापाअ मणोहरअं** ॥ १ ॥ सुमणा [सुमनाः] ।

कुरु करकर्णविवर्जितं द्वयोर्गजयोस्तुरंगमम् ।
पुरतश्चारु [स]चामरं सुमनःपादं शोभनम् (मनोहरम् ?) ॥ १ ॥

तुरंगमं गजद्वयस्य पुरतोऽग्रे कुरु । चतुर्मात्रगणद्व(त्र)यमित्यर्थः । तत्र तृतीयस्य तस्य विशेष उच्यते । कीदृशं तुरंगमम् ? । करेणान्तगुरुणा कर्णेन च द्विगुरुणा विवर्जितम् । विकल्पद्वयं तत्र [न] कर्तव्यमित्यर्थः । किंच चामरेण गुरुणा सहितम् । सुमनसो द्विपद्याः पादे चरणे । चार्विति क्रियाविशेषणम् । अनेनैतद्दर्शयति सत्स्वप्यनेकान्त(केषु ?) विकल्पेषु तथा विधेयं यथा चार्वी रचना भवति ॥ उदाहरणम्—॥ १ ॥

**सतुरंग** इति ।

**सतुरंगरहो णरिंदओ**
**विलसंतमहग्घहारओ ।**
**सुमणोहरअम्मि मुद्धिए**
**दीसइ ताराइ पाअए** ॥ २ ॥ तारा ।

सतुरंगरथो नरेन्द्रो विलसन्महार्घहारः ।
सुमनोहरे मुग्धे दृश्यते तारायाः पादे ॥ २ ॥

तारायाः पादे मध्यं च दृश्यते आत्मात्रगणत्व(?)दनन्तरं गुरु । सहेति तात्पर्यम् । विशेषणानि स्पष्टानि । तानि च लालित्योत्पादनाय गृहीतानि । सुमनोहराक्षररचनाविशिष्टमुदाहरणं दृष्ट्वा तथैव कविभिर्विभर्तीति (कर्तव्यमिति ?) ॥ २ ॥

**जीअ पेच्छसि** इति ।

**जीअ पेच्छसि रहंगअं**
**चावअं च सवडाअअं ।**
**तं विआण इह छंदए**
**जोण्हअत्ति पसअच्छिए** ॥ ३ ॥ ज्योत्स्ना ।

---

१ अमरः पादं AB. २ गजद्वयं यस्य AB. ३ विशेषतस्यमुच्यते AB. ४ I am not giving the signs illustrating the use of short (I) and long (S) letters as they are not correctly reproduced in either ms. ५ तारयाः पादः AB.

यस्याः पश्यसि रथाङ्गं चापं च सपताकम् ।
तां विजानीहि इह छन्दसि ज्योत्स्निकेति प्रसृताक्षि ॥ ३ ॥

हे विस्तीर्णाक्षि[1] यस्याः पञ्चमात्रगणद्वयं पश्यसि गुर्वन्तेन त्रि(त्रि)मात्रेण सहितं तां ज्योत्स्निकेति जाणी(नी)हि । रथाङ्गं चक्रम् । चापं धनुः ॥ ३ ॥

**पुरओ जोह** इति ।

**पुरओ जोहअस्स**
**चारु सचावअस्स ।**
**पाअ[2] मणोवइआ(अ)ए**
**सोहइ नेउर(रे)णं ॥ ४ ॥** मनोवती ।

पुरतो योधस्य चारु सचापस्य ।
पादो नूपुरेण शोभते मनोवत्याः ॥ ४ ॥

चतुर्मात्रस्य पुरतोऽग्रे पञ्चमात्रस्य नूपुरेणोपलक्षितं[3] पादं मनोवत्याः कुर्विंत्यर्थः ॥ ४ ॥

**पेच्छप** इत्यादि ।

**पिच्छ पिच्छ छउओअरिए**
**अह सबाणससरासणओ ।**
**कोमुईअ पय सोहिअओ**
**विरमई अ पाअस्स करो ॥ ५ ॥** कौमुदी ।

पश्य पश्य छातोदरिके एष सबाणशरासनः ।
कौमुद्याः कथं शोभितो विरामे पादस्य करः ॥ ५ ॥

पञ्चमात्रगणद्वयेन सहितः करश्चतुर्मात्रो गुर्वन्तो गणः यस्य तनूदरि शोभितः अतीव मनोहर इत्यर्थः ॥ ५ ॥

**अह सतुरंगम** इति ।

**अह सतुरंगमएणं**
**सुंदरि संदणएणं ।**
**दोहि अ नेउरएहिं**
**सोहइ सुट्ठु पगीया ॥ ६ ॥** प्रगीता ।

एषा च(स)तुरंगमेण सुन्दरि स्यन्दनेन ।
द्वाभ्यां च नूपुराभ्यां शोभते सुष्ठु प्रगीता ॥ ६ ॥

चतुर्मात्रगणद्वयेन [गुरुद्वयेन] च प्रगीता शोभते । स्यन्दनो रथः । अहेत्येतदो[4] वाचको देशीपदो निपातः ॥ ६ ॥

**पेक्ख पक्खिणाह** इति ।

---

१ विस्तीर्नताक्षिः AB. २ पाओ णेउरेण सोहइ मणोवइए Com. ३ पुरतो AB. ४ अहोन्येतदो AB.

पिच्छ पक्खिणाहअं
  पत्थिवं च बीअअं ।
रत्तिआइ पाअए
  चा॑रु भूसणिल्लए ॥ ७ ॥ रत्ता ।

प्रेक्षस्व पक्षिनाथं पार्थिवं च द्वितीयं ।
रक्तिकायाः पादे चारुभूषणे॓वति ॥ ७ ॥

पञ्चमात्रं मध्यलघु आदौ पश्चाच्चतुर्मात्रं मध्यगुरु रक्तिकायाः प(पा)दे प्रेक्षस्व । पक्षिनाथो गरुडः । इल्लप्रत्ययो मत्वर्थे ॥ ७ ॥

**रत्तिआइ** इति ।

रत्तिआइ पाअअम्मि
  नेउरं च॓ं दिण्णमंते ।
माणिणीअ रूअअं तं
  दाविअं खु पाअडं ते ॥ ८ ॥ मानिनी ।

रक्तिकायाः पादे नूपुरं स्थापयान्ते ।
मानिन्या रूपकं तद्दर्शितं खलु प्रकटं तव॓ ॥ ८ ॥

अन्ते गुरुणाधिकेन पादेषु रक्तिकैव मानिनीत्यर्थः । दाविअं दर्शितम् । पा॓अडं प्रकटम् । ते तव ॥ ८ ॥

**किण्णएसि** इति ।

किं ण देसि दिट्ठिं णअंगिए
  अह सबाणचावे णरिंदए ।
अच्छराइ फुडणेउरिल्लए
  पाअअम्मि पसअच्छि लग्गए ॥ ९ ॥ अप्सराः ।

किं न ददासि दृष्टिं नताङ्गि अस्मिन्सबाणचापे नरेन्द्रे ।
अप्सरसः स्फुटनूपुरवति पादे प्रसृताक्षि लग्ने ॥ ९ ॥

अप्सरसः पादे द्वौ पञ्चमात्रावेको मध्यगुरुश्चतुर्मात्रोन्ते गुरुश्चेति वक्तव्ये भङ्गयन्तरेणैतदेवाह । सहबाणेर्न चापेन वर्तते योऽसौ नरेन्द्रः तस्मिन्सनूपुरेऽप्सरसः पादे लग्ने पतिते कथं दृष्टिं न ददासीति । अहँ अस्मिन् ॥ ९ ॥

**अविरुद्ध** इति ।

---

१ A adds दीसइत्ति नेउरं before चारु. २ भूषणविति A; भूषणं चेति B. ३ नेउरं ठवेहि अंते Com. ४ तत् AB. ५ वाउडं AB. ६ Before [illegible] both A and B read [illegible]. ७ अहं AB.

अविरुद्धवीअपत्थिवेसुं
पसअच्छि दे(दो)सु जोहएसुं ।
दिण्णेसु देसु पोमिणीए
पाअम्मि चावचामराइं ॥ १० ॥ पद्मिनी ।

अविरुद्धद्वितीयपार्थिवयोः प्रसृताक्षि द्वयोर्योधयोः ।
दत्तयोर्देहि पद्मिन्याः पादे चापं च चरमं(मरं) च ॥ १० ॥

चतुर्मात्रयोरन्ते पञ्चमात्रं गुरुं च देहि । क[थं]भूतयोर्योधयोः द्वितीयस्थाने पार्थिवो मध्यगुरुर्न निषिद्धः ययोः । एवं पञ्चविकल्पं द्वितीयमभ्यनुज्ञातम् ॥ १० ॥

दे विज्जु[आ]इ इति ।

दे विज्जुआइ पाअघडियाणं
इह इच्छा तिण्ह तुरंगआणं ।
पढमअतइअआण विअसिअच्छि
पुरओ एक्कअस्स सुवण्णु चावं ॥ ११ ॥ विज्जुआ [विद्युत्] ।

देहि विद्युतः पादघटितानाम(मि)हेच्छया त्रयाणां तुरङ्गमाणाम् ।
प्रथमतृतीयकानां विकसिताक्षि पुरत एकैकस्य सुतनु चापम् ॥ ११ ॥

विद्युतः पादे घटितानां रचितानां त्रयाणां तुरङ्गमानां मध्याद्यौ प्रथमतृतीयौ गणौ तयोरेकैकस्य अन्यतमस्य पुरतश्चापमिच्छाया देहि । अस्मिन्प्रथमस्य दर्शितम् ॥ ११ ॥

थोरोरो(रु) हाल इति ।

थोरोरु हालभुँवइंदविद्धकइलक्खणेसु सिद्धिआए
विणआइ हारिवहुवण्णदिन्नसोहम्मि देसु पाअअम्मि ।
हत्थेण णिज्जियासोअमुद्धसहआरपल्लविल्लएणं
सतुरंगपत्थिवतिअस्स चारु पुरओ धणुं च रअणअं च ॥ १२ ॥ विनता ।

थोरोरु(स्थविरोरु) हालभुजगेन्द्रवृद्धकविलक्षणेषु सिद्धाया
विनताया हारिबहुवर्णदत्तशोभे देहि पादे ।
हस्तेन निर्जिताशोकमुग्धसहकारपल्लवेणअ (?)
सतुरङ्गपार्थिवत्रिकस्य चारु पुरतो धनुश्च रत्नं च ॥ १२ ॥

तुरङ्गः पार्थिवः तुरङ्गपार्थि[वः] तुरङ्गः पार्थिवश्चेति । पञ्चमात्रं गुरुं चेति देहि वनि(विन)तायाः पादे हालादिलक्षणेषु प्रकटायाः । हालः सातवाहनः । भुजगेन्द्रौ कम्बलाश्वतरौ । थोरः परिवर्तुलः । इल्लः स्वार्थे । निर्जितान्यशोकस्य मुग्धसहकारस्य पल्लवानि येनेति हस्तविशेषणम् । मुग्धोऽभिजातः । रमणीयैर्बहुवर्णैर्दत्ता शोभा येनेति पादविशेषणम् ॥ १२ ॥

---

१ वृत्तयान्देहि BA. २ द्वितीयस्थाने स्थाने AB. ३ Mark the वश्रुति. सुवण्ण AB; ४ त्रयोनां तुरंगमान्यं AB
५ पुरतोऽपच्छाया AB. ६ सोठेदइ पादे AB. ७ हंतेन AB. ८ मुक्कोहिजात: AB.

संदण इति ।

संदणपुरओ अ दोण्णि बाणआ
ताण पुरिल्लआ वेअअंतिआ ।
कण्णसुहावए जीअ पाअए
पंकअवअणिए सा सरस्सई ॥ १३ ॥ सरस्वती ।

स्यन्दनं पुरतश्च द्वौ बाणौ तयोः पुरस्ताद्वैजयन्तिका ।
कर्णसुखावहे[1] यस्याः पादे पङ्कजवदने सा [स]रस्वती ॥ १३ ॥

चतुर्मात्रो द्वौ पञ्चमात्रौ [लघुः] गुरुश्च सरस्वत्याः कार्य इति वाक्यार्थः । वैजयन्ती पताका ॥ १३ ॥

जे(जी)से जोह इति ।

जीसे जोहवं चाव अ माअंगअं
पेच्छसि पाअए तुरअं च चउत्थअं ।
विरमणिउत्तअं जीसे अ धअग्गअं
भणइ छंदए सा सुंदरि सुप्पहा ॥ १४ ॥ सुप्रभा ।

यस्या योधं चापं [च] मातङ्गं पश्य[2]सि पादे तुरगं [च] चतुर्थम्[2] ।
विरा[3]मे नियुक्तं यस्याश्च ध्वजाग्रं भण्यते छन्दसि सा सुन्दरि सुप्रभा ॥ १४ ॥

यस्याश्चतुर्मात्रपञ्चमात्रौ पुनश्चतुर्मात्रद्वयमन्[4]तेगुरुं त्रिमात्रं पश्यसि सा सुप्रभा नाम द्विपदी । मातङ्गो गजः । विरामेऽन्ते नियुक्तो निबद्धः ॥ १४ ॥

वारा(र)णण इति ।

वारणणरेंदसंदणबाणए
जीसे कमेण पाअणिउत्तए ।
पेच्छसि ससिस्स सण्णिभवअणिए
जाणसु णअंगि तं च विहूइअं ॥ १५ ॥ विभूतिः ।

वारणनरेन्द्रस्यन्दनबाणानां(न्) यस्याः क्रमेण पादनियुक्तं(क्तान्) ।
पश्यसि शशिसन्निभवदने जानीहि नताङ्गि तां च विभूतिकाम् ॥ १५ ॥

पादनियुक्तांश्चरणविरचितान् वारणादीन्यस्याः पश्यसि तां विभूतिकां जानीहि ॥ १५ ॥

वारणजोह इति ।

वारणजोहरहतुरंगमएहिं
विरसपरिट्ठविअविहूसणएहिं ।

---

१ कर्णसुखावहो यस्याः पादः AB. २ The line is repeated in A and B. ३ विरामनयुक्ते. ४ मन्तेगुरुं AB.

पाओ दूरं सुमणोहरिआए
होइ अ सोम्ममुहि सुमंगलिआए ॥ १६ ॥ सुमङ्गला ।

वारणयोधरथतुरंग[1]मैर्विरामप्रतिष्ठापितभूषणैः ।
पादो दूरं सुमनोहराया भवति च सौम्यमुखि सुमङ्गलायाः ॥ १६ ॥

चतुर्भिश्चतुं[2]मात्रैर्गुरुणा च सुमङ्गलापादो भवति । दूरम[त्य]र्थम् ॥ १६ ॥

ठवि[3]अएसु इति ।

ठविअएसु सरतोमरएसुं
दे ठवेसु पसअच्छि तुरंगं ।
चंदिआइ वण्णुज्जलअम्मि
पाअअम्मि फुडनेउरअम्मि ॥ १७ ॥ चन्द्रिका ।

स्थापितयोः[4] शरतोमरयोः स्थाँ[5]पय प्रसृताक्षि तुरङ्गम् ।
चन्द्रि[6]काया वर्णो[6]ज्वले पादे स्फुटनूपुरे ॥ १७ ॥

पञ्चमात्रयोः स्थापितयोश्चतुर्मात्रं स्थापय(या)न्ते च गुरुं चन्द्रिकायाः पादे वर्णैरक्षरैरुज्वलैः शोभिते । दे[7] इति प्रार्थनायां निपातः ॥ १७ ॥

विअआइ इति ।

विअआइ पिए च्छउओअरिल्लिए
ठविअम्मि ठवेसु विसालणित्तिए ।
सतुरंगजुअम्मि रहे णरिंदअं
पुरओ दिण्णुज्जलपउमराअअं ॥ १८ ॥ विजआ [विजया] ।

विजयायाः प्रिये च्छातोदरिके स्थापिते स्थापय विलास(शाल)नेत्रे ।
सतुरंगयुगे[8] रथे नरेन्द्रं पुरतो दत्तोज्ज्वलपद्मरागम् ॥ १८ ॥

सह तुरंगयुगेन वर्तते योऽसौ रथश्चतुर्मात्रस्तस्मिन् स्थापिते नरेन्द्रं मध्यगुरुं स्थापय । दत्त उज्ज्वलः पद्मरागो यस्येति नरेन्द्रविशेषणम् । छउअं तनुम् ॥ १८ ॥

सअण्णआणं[9] इति ।

सअं[10]णणआण रसिए सुइसुहावहे
मणोहरे सुललिए कुणसु पाअए ।
पहावईअ विउणे थणतुरंगए
णअंगिए विरमए धअवडाँ[11]अअं ॥ १९ ॥ प्रभावती ।

---

१ ०तुरंगमौ...भूषणौ पादौ AB. २ चतुर्भिश्चतुभिरस्तैर्गुरुणा च AB. ३ ठविपरेस्विति AB. ४ स्थापितो यदि सरतोमरयोः AB. ५ पदे स्थाने पद प्रसृत्यक्षि AB. ६ चन्द्रिकायवकोज्वले AB. ७ पादे AB. ८ ०युगं रथेन नरेन्द्री AB. ९ सअउणणअण्णेति AB. १० Ms. reads सराकरान्आण (A) सराल्रान (B). Commentator's reading is accepted in the text. ११ Com. seems to read विरमएधअवडाअए.

सकर्णकानां रसप्रदे श्रुतिसुखावहे मनोहरे सुललिते कुरु पादे ।
प्रभावत्या [द्वि]गुणौ स्तनतुरंगौ नताङ्किके विरामे ध्वजपताके ॥ १९ ॥

स्तनो मध्यगुरुः । तुरंगः अविशेषेण चतुर्मात्रः । तौ द्विगुणौ गु(कु)रु । अन्ते चैका ध्वजपताका ययोरिति स्तनतुरंगि(ग)विशेषणम् । चतुर्भिश्चतुर्मात्रैस्त्रिमात्रे[ण] च प्रभावत्याः पादो भवतीत्यर्थः । सकर्णाः कवयः तेषां रसं ददाति यस्तस्मिन् । श्रुतिः कर्णः ॥ १९ ॥

अ(सु)विअड्ढ इति ।

सुविअड्ढकईण सुहावणिए
ललिअक्खरपंतिपसाहणिएं ।
कुण णंदिणिपाअमणोहरिएं
रसणेउरआण जुअस्स जुअं ॥ २० ॥ नंदिनी ।

अविदंड(दग्ध)कवीनां सुखापणं(णे) ललिताक्षरपङ्क्तिप्रसाधनम् ।
कुरु नन्दिनिकायाः [पादे] मनोरमं रसनूपुरयोर्युगलस्य युगम् ॥ २० ॥

रसो द्विलघुगणः । नूपुरो गुरुः । तयोर्युगलस्य युगं कुरु । तौ चतुः स्थापयेत्यर्थः । आपण इवापणः । तस्मिन्नापणे हट्टे कवीनां सुखप्रापक इत्यर्थः । आपणाद्धि सर्वं(वैः) प्राप्यते सर्वं वस्तु ॥२०॥

दइए इति ।

दइए छउ[ओ]अरि पीणपओहरिए
सिरिआअ ठवेसु मियंकसमाणणिए ।
रसनेउरआण जुअस्स जुअम्मि ठिए
फरिसं च रवं च विरामविहूसणअं ॥ २१ ॥ श्रीः ।

दयिते च्छातोदरि पीनपयोधरे श्रियः स्थापय मृगाङ्कसमानने ।
रसनूपुरयोर्युगप(ल)स्य युगे स्थितिः(ते) स्पर्शं च रसं च विरामविभूषणम् ॥ २१ ॥

नन्दिन्येव(वा)धिकान्तगुरुचतुर्मात्रा श्रीरित्यर्थः । स्पर्शरवौ लघुसंज्ञौ ॥ २१ ॥

चंदक्कंतिआ इति ।

चंदक्कंतिआ मुहवाराणिया
करवीसंतिआ बीआउहिआ ।
तइअतुरंगिआ इह लक्खणए
पंकअवअणिए तुह द(दा)वियआ ॥ २२ ॥ चन्द्रकान्ता ।

चन्द्रकान्ता मुखवारणिका करविश्रान्तिका द्वितीयाअ(यु)धिका ।
तृतीयतुरङ्गिका इह लक्षणे पङ्कजवदने तव दर्शिता ॥ २२ ॥

---

१ रसपदेन AB. २ सलिल AB. ३ गुचतुरंगी AB. ४ ०केतिमकरध्वज० AB. ५ गुरो AB. ६ अंतिसिका (अंतिमिका ?) ध्वजापताकादयोरिति AB. ७ श्रुतिकर्णं AB. ८ Com. seems to read पसाहणिअं...णंदिणिपाअ मणोरमअं. ९ रसाक्षिलघु० AB. १० ...सिति AB.

मुखे वारणो यस्याः करौ विश्रान्तौ विरामे च यस्याः । द्वितीय आयुधः पञ्चमात्रो यस्याश्च । दात्रिआ दर्शिता ॥ २२ ॥

**वारणबाण** इति ।

**वारणवाणअं जोहो चावअं च**
**ताण पुरिल्लिअं कुर्णं पालंबअं च ।**
**जाणसु मुद्धिए भुअअणिओत्तअम्मि**
**सवंणसुहावए हंसीपाअअम्मि** ॥ २३ ॥ हंसी ।

**वारणबाणौ योदं(धं) चापं च तेषां पौरस्त्यं तथा प्रालम्बकं च ।**
**जानीहि मुग्धे भुजंगनियुक्ते कर्णसुखावहे हंस्याः पादे ॥ २३ ॥**

प्रथमतृतीयौ चतुर्मात्रौ द्वितीयचतुर्थौ पञ्चमात्रौ गुरुश्चान्ते हंस्या [पादे] । प्र(प्रा)लम्बकमाभरणम् । भुजगनियुक्ते कम्बलतराश्वरचिते ॥ २२ ॥

**एक्को[3] वारण** इति ।

**एक्को वारणओ वीओ तुरंगओ**
**तइओ संदणओ वाणो चउत्थओ ।**
**पंचमअं च पुणो जीसे धअग्गअं**
**सा जइ पाअडिआ पच्छा पिअल्लिए** ॥ २४ ॥ पथ्या ।

**एको वारणो द्वितीयस्तुरङ्गः तृतीयः स्यन्दनो बाणश्चतुर्थः ।**
**पञ्चममपि पुनः यस्या ध्वजाग्रं सा गजे (जगति) ? द्र(प्र)कटा पथ्या प्रियतमे ॥ २४ ॥**

स्पष्टार्थम् ॥ २४ ॥

**जीअ तुरंग** इति ।

**जीअ तुरंगवाणवाणासणपाणिजुअं णरिंदओ**
**होइ अ पाअअम्मि चंदुज्जलओ विरमम्मि आ(हा)रओ ।**
**तं थोरोरु लडहवाहूलइए मअमुद्धडच्छिए**
**जाणसु छंदअम्मि रइअत्ति पिए महुरक्खरिल्लिए** ॥ २५ ॥ रचिर्ता ।

**यस्यास्तुरंगबाणबाणासनपाणियुगं नरेन्द्रः भवति च पादे चन्द्रोज्ज्वल(लो) विरामे हारः ।**
**तां थोरोरुलडहबाहुलतिके मृगमुग्धाक्षि जानीहि छन्दसि रतिरिति प्रिय(ये) मधुराक्षरवति ॥ २५ ॥**

पाणियुगान्तः समाहारे द्वंद्वः । बाणासनं धनुः । एतदुक्तं भवति—चतुर्मात्रादनन्तरं पञ्चमात्रद्वयं पश्चाद्वर्तन्तौ चतुर्मात्रावेव ततोऽपि मध्यगुरुः गुरुश्चान्ते यस्याः सा रतिर्नामेति । लडभः सविलासः । थोरं परिवर्तुलम् । मृगस्येव मुग्धे अक्षिणी यस्याः तस्या आमन्त्रणम् । मधुराक्षर[वति] इति पादविशेषणम् ॥ २५ ॥

१ तह Com. २ कण्ण. Com. ३ एक्कोपावारणेति AB. ४ रतिका Com. ५ बाणा बाणानिषाणि० Ab. ६ लडितिके AB.

यस्या एव विशेषलक्षणाह(र्थं) गीतिकामाह—**करअल** इति

**करअलजुअलस्स णिलए रइयापाअअम्मि सुइसुहावहम्मि ।**
**संदणओ ण विरुज्झइ पत्थिवठाणम्मि सुवंणु विप्पओ व्व ॥**
**रइयाभेअविसेसदंसणत्थे गीअइया ॥ २६ ॥** गीतिका ।

करतलयुग[ल]स्य निलया(ये) रतिकापादे श्रुतिसुखावहे ।
स्यन्दनो न विरुध्यते पार्थिवस्थाने सुतनु विप्रो वा ॥ २६ ॥

यस्मिन्स्थानद्वयेन्तगुरुष्करसंज्ञो विहितः तत्र यद्यविशेषेवा(ण) चतुर्मात्रो भवति तथापि अविरोधी तथैव चास्य(मध्य)गुरोः सर्वलघुः ॥ २६ ॥

**सत्तिदंड** इति ।

**सत्तिदंडवाणाण ठवेसु पुरिल्लअं**
**भावहावजुअहं लायणयअग्गअं ।**
**सोम्मिआइ सोमाणणतुल्लम्मि(मि)यंगिए**
**पाअअम्मि सुमणोहरआम्मि पिअल्लिए ॥ २७ ॥** सौम्या ।

शक्तिदण्डबाणयोः स्थापय पौरस्त्यं योध्रं च तुरंगं च प्रिये सध्वजाग्रम् ।
सोम्यायाः सा(सौ)[म्या]ननतुलितमृगाह्ले(ङ्के) पादे सुमनोहरे प्रियतमे ॥ २७ ॥

पञ्चमात्रयोरग्रे चतुर्मात्रगु(ग)णद्वयं त्रिमात्रं चान्तर्गुरुं स्थापय । सौम्येनाननेन तुलितः सदृशीकृतो मृगाह्लो(ङ्को) यया तस्या आमन्त्रणम् ॥ २७ ॥

**पढमवाण** इति ।

**पढमवाणवीआसणितइअतुरंगमस्स**
**कयचउत्थरहपंचमफुडधयवट्टअस्स ।**
**सुम्मिआई(इ) पाअस्स विरामणिउत्तएणं**
**होइअ सुवंणु नाम सामत्ति विहूसणेणं ॥ २८ ॥** श्यामा ।

प्रथमबाणद्वितीयाशति(नि)तृतीयतुरंगमस्य. कृतं(त)चतुर्थरथपञ्चमस्फुटध्वजपटस्य ।
सोम्यायाः पादस्य विरामनियुक्तेन भवति सुतनु नाम श्यामेति विभूषणेन ॥ २८ ॥

एवंभूतसोम्यापादस्य विरामनियुक्तेन गुरुणा श्यामेति नाम भवति । अशानिर्वर्ज(त्र)म् ॥ २८ ॥

**पंचमछट्ठ** इति ।

**पंचमछट्ठट्ठिअपाअक्कअसत्तमठविअरहंगिआए**
**तइअचउत्थअक्कअमाअंगअविरमणिरूविअरअणिआए ।**

---

१ सुतनु (वश्रुति). २ श्रुतिसुवाह AB. ३ वाह्विस्थाने AB. ४ भावहावजोअला यह्णयअग्गअं A. Com. seems to read जोहं च तुरंगं च पिए सधअग्गअं. Perhaps read भावहारजुअलं णिहणे अ धअग्गअं (= भावहारयुगलं निधने च ध्वजाग्रम्). ५ सुमनोहरेति प्रिय० AB. ६ चतुगुरु AB.

पढमट्ठाणणिउत्ततुरंगमबीअपरिट्ठिअजोहियाए
कस्स सुहाइ[1] ण वड्ढइ हरिसो सुअणु विलासिणिदुवइआए ॥ २९॥ विलासिनी ।

पञ्चमषष्ठस्थिते(त)पदातिसप्तमस्थापितरथाङ्गिकया
तृतीयचतुर्थ[2]कृतमातङ्गिकविरामनिरू[पि]तरत्निकया ।
प्रथमस्थाननियुक्ततुरंगमद्वितीयपरिष्ठितयोधया[3]
कैस्य भूतया न वर्धते हर्षः सुतनु विलासिनीद्विपदिकया ॥ २९ ॥

सर्वस्यैव विलासिन्या अवधारितया हर्षो वर्त(र्ध)ते यस्यां चतुर्मात्राः षट् सप्तमा(मो)ऽन्ते पञ्चमात्रो गुरुश्च विरामे भवति । सर्वत्रैवास्मिन् सामान्योक्तोवधे(क्तौ बन्धे ?) लक्ष्यगतिरनुसर्तव्या । यस्मादाचार्या य(यत्) स्वाचारत्वात्प्राप्यते तदुदाहरणेनापि प्रकाशयन्ति । एतदर्थमेव सुललितपदरचनां शिक्षयता नानाविधान्यामन्त्रणापदानि प्रयुक्तान्याचार्येण ॥ २९॥

वि(णि)अमिअ इति ।

णिअमिअअं खुरुप्पअं च पुरओ[4] अ जोहअस्स
पट्टिसओ रहंगअं मग्गए सुरगअस्स ।
पेच्छसि ससिसमाणणे रूवं[5](व)[अं] सहिअणा(आ)ण
सुई(इ)सुहअम्मि मुद्धिए [पाए अ] लच्छिआए ॥ ३०॥ लक्ष्मीः ।

नियमितं क्षुरप्रं पुरतश्च योधश्च(स्य) पट्टिशं रथाङ्गं मार्गतः सुरगजस्य ।
पश्य शशिसमानने उत्सुकं सहृदयानां श्रुतिसुभगं मुग्धे पादे च लक्ष्म्याः ॥ ३० ॥

लक्ष्म्याः पाद इदमिदं पश्यत (?) उत्सुकमुत्काण्ठितं कृत्वा । किं तश्(त्) चतुर्मात्रस्य पुरतोऽग्रे क्षुरप्रं पञ्चमात्रं नियमितम् । क्षुरप्रसंज्ञा शरविशेषस्य । पश्चात्पट्टिशरथाङ्गौ पञ्चमात्र(त्रौ) । पट्टिशः आयुधविशेषः । सुरगजस्यादिलघोः मार्गतः पश्चाद्भागे । सहृदयानां श्रुतिसुभगं इति [संबन्धः] ॥ ३०॥

जीअ दुए इति ।

जीअ दुए वारणआ दो तुरआ जोहओ अ
ताण पुरो[6] णिअमिअउ(ओ) अंतिअओ सुरगओ अ ।
पेच्छिज्जसु चंदवअणिए सुइसुहवत्तणम्मि
लक्खणए कइअणओ भणइ अ [तं] मेहअंति ॥ ३१॥ मेधा ।

यस्या द्वौ वारणौ [द्वौ] तुरगौ योधश्च तेषां पुनर्नियमितोऽन्तिमः सुरगजश्च ।
पश्य चन्द्रवदने श्रुतिसुखवर्तने लक्षणे कविजनो भणति च तां मेधेति ॥ ३१ ॥

हे रा(च)न्द्रवदने पश्य विलोकय । श्रुतौ सुखं वर्तयति यत्तस्मिंल्लक्षणे । कविजनस्तमेव भणति [मेधामिति] । किंभूताम् । यस्य द्वौ र्भाणौ(वारणौ?) चतुर्मात्रौ पुनरपि द्वावेव तौ तुरगाख्या(वश्वा ?)–

---

१ शुभया ? Com. has भूतया for this word. २ The words प्रथमस्थाननियुक्त from next line are repeated before तृतीयचतुर्थ० in both AB. ३ याधेकयास्य AB. ४ पुरओ पुरओ अ AB, ५ उच्छुअं Com. ६ पुप्पो Com,

वनन्तरं योध एवं पञ्च चतुर्मात्राः। पुनः पश्चादन्तिमः पञ्चमात्रः आदिलघुः। नियमितो निबद्धः ॥ ३१ ॥

**हाररसाण** इति।

**हाररसाण पिए पुरओ कुण णेउरअं**
**गंधविहूसिअए कुण दोण्णिवि पत्थिवए।**
**चारुपओहरए ठविअम्मि मणोहरए**
**दूरसमुज्जलअम्मि णिउंजसु मुद्धडिए ॥ ३२॥**

हाररसयोः प्रिये पुरतः कुरु नूपुरं गन्धविभूषितौ कुरु द्वौ पार्थिवौ।
चारुपयोधरे स्थापिते मनोहरे ह(दू)रसमुज्ज्वलं विनियुङ्क्ष्व [मुग्धे] ॥ ३२ ॥

[विनियुङ्क्ष्व] विधेहि कस्याः किंचि(किमि)त्यस्यैवाह(र्थ)स्य पूरणार्थं गीतिकामाह—ह(फ)रिसं इति।

**फरिसं मणिं महूए दूरूज्जलवण्णदिण्णसोहम्मि।**
**अस्सक्कंतापाअए बहुसहिअ[अ]लोअदिण्णहरिसम्मि ॥ ३३॥**

**लक्खणपूरणत्थे गीईआ।** अस्सक्कन्ता [अश्वक्रान्ता]।

स्पर्शं रवे(मणिं) च मधुरे दूरोज्ज्वलवर्णदत्तशोभे।
अश्वक्रान्तापादो(दे) बहुसहृदयलोकदत्तहर्षः(र्षे) ॥ ३३ ॥

स्पष्टेयम्। वस्तुकोदाहरणम्॥ ३३ ॥

**हाररस** इति

**हाररसाण जुअस्स [जु]ए ठविअम्मि ठविज्जओ णेउरअं**
**ठाइ पुणोवि सरूवजुअं कडअं करपल्लवअं च पिए।**
**तेसु ठवेसु [स]सद्दजुअं पसअच्छि णिउंजसु चामरअं**
**संगअपाअमणोहरए विविहोज्जलवण्णपसाहणए ॥ ३४॥** संगता।

हाररसयोर्युगप(ल)स्य युगे स्थापिते स्थापय नूपुरं
ददस्व पुनरपि सरूपयुगं कटकं करपल्लवमपि वि(प्रि)ये।
तेषां स्थापय सशब्दयुगं प्रसृताक्षि नियुङ्क्ष्व चामरं
संगतिकाचरणे प्रिये विविधोज्ज्वलवर्णप्रसाधने ॥ ३४ ॥

संगतिकायाश्चरण इदमिदं स्थापय। हारश्च रसश्च हाररसौ तयोर्युगप(ल)स्य युगे स्थापिते तयोश्चतुर्निवसु(वेशि ?)तयोरित्यर्थः। त(आ)दिगुरुचतुर्मात्रचतुष्टय इति यावत्। पश्चाद्गुरुं स्थापय। देहि पुनरपि सरूपयुगं गुरुम्। अनन्तरमपि करपल्लवमन्तगुरुं स्थापय तेषु स्थापितेषु सत्सु। किंभूतं करपल्लवं सहशब्दयुगेन वर्तमानम्। अन्ते चैषां चामरं नियुङ्क्ष्व। आदिगुरुभिः सप्तभिर्गुरुणा च संगतायाः पादो भवतीति तात्पर्यम्। विविधैरुज्ज्वलैर्वर्णैः प्रसाधनं यस्येति समासः ॥ ३४ ॥

---

१ ०ज्जलअं विणिउंजसु Conj. [illegible] संगतकचरणप्रिये AB.

**सतुरंग** इति ।

**सतुरंगरहस्स दो(दे)सु पुरउ(ओ) कमेण जोहअस्स**
**वारणअं मालइ(ई)अ पाइक्कअं च महुरअम्मि ।**
**विसमट्ठाणो(ण)अविरुद्धथणछट्ठकअरहंगअम्मि**
**पाअम्मि वरोरु विरमविलसंतपउमराअअम्मि ॥ ३५ ॥** मालती ।

सतुरंगरथस्य देहि पुरतः क्रमेण योधस्य वारणं मालत्याः पदातिं [च] मधुरे[1] ।
विषमस्थानाविरुद्धस्तनषष्ठकृतरथाङ्गे पादे वरोरु विरामविलसत्पद्मरागे ॥ ३५ ॥

सह[2] तुरंगेण रथेन च वर्तते योऽसौ [यो]धस्तस्य पुरतो वारणं पदातिं च देहि । पञ्च चतुर्मात्रा[न्] स्थापयेदित्यर्थः । मालत्याः पादे । किंभूते । विषमे स्थाने न विरुद्धं(द्धः) स्तनो यस्य । 'सामण्णेण' (१·२२) इत्यस्यापवादः । षष्ठे च रथाङ्गं चक्रं यस्य । विषमस्थानेऽविरुद्धस्तनश्चासौ षष्ठकृतरथाङ्गश्चेति समासः । तस्मिन् । तथा विरामेऽन्ते विलसन्पद्मरागो गुरुर्यस्य ॥ ३५ ॥

**मुद्धडिए** इति ।

**मुद्धडिए वहुविअड्ढलोअसुस(सु)हाविआए**
**पंचमअं तइअअं च इह हारिवंधिआए ।**
**कुल(ण) चउसुवि पाअएसु महुरक्खरिल्लिआए**
**हरिरहगयजोहआण णरणाहअं दुवाए ॥ ३६ ॥** द्रुता ।

मुग्धिके बहुविदग्धलोकसुसुखावहायाः पञ्चमं तृतीयं चे(चे)ह हारिबन्धिकायाः ।
गु(कु)रु चतुर्ष्वपि [पादेषु] मधुराक्षा(क्ष)रवत्याः हरिरथगजयोधानां नरनाथं द्रुतायाः ॥ ३६ ॥

द्रुतायाश्चतुर्मात्रैः षट्के कृते तन्मध्ये तृतीयपञ्चमयोर्नरनाथयोर्विधानमिति तात्पर्यम् । हरिरश्वः ॥ ३६ ॥

**पढमतुरंग**[3] इति ।

**पढमतुरंगवीअविणिउत्तवाणआणं**
**तइअणिरूविआसिसचउत्थपत्थिवाणं ।**
**वणराईअ देसु विरमम्मि पाअआणं**
**णेउरजुअलअं च महुरक्खरिल्लिआणं ॥ ३७ ॥** वनराजिः ।

प्रथमतुरंगद्वितीय[4]विनियुक्तबाणानां तृतीयनिरूपितासिसचतुर्थपार्थिवानाम् ।
वनराज्या देहि विरामे पादानां[5] नूपुरयुगलकं च मधुराक्षरवताम् ॥ ३७ ॥

वनराज्याः पद[विरामे] नूपुरयुगलकं गुरुद्वयं देहि । किंभूतानाम् । प्रथमे तुरंगो द्वितीये च विनियुक्तो बाणो येषां च तृतीये[6]ऽसिर्निरूपितः सह च चतुर्थेन पार्थिवेन वर्तन्ते ये ते तृतीय-

---

१ मधुरो...रुद्धः स्तनषष्ठ AB. २ स च तुरंगमं AB. ३ पर्णमसतुरंगेति AB. ४ प्रथमचतुरंगाद्वितीय AB.
५ वनराज्या देहि विरामे पादानां immediately repeated in AB. ६ तृतीयेपिसनिरू० AB.

निरूपितासिसचतुर्थपार्थिवास्तेषाम् ॥ ३७ ॥

**पढम** इति ।

**पढमगइंदबीअविणिउत्तसरासणाण[1] तइआसणी(णि)ए**
**कुणसु चउत्थमुद्धकरपल्लवए फुडपंचमसंदणए ।**
**वंसंथो[2](त्था)इ विरमरसणेउरए कअछट्ठतुरंगमए ।**
**पाए पुण्णअंद्द(द)सोम्माणणिए बहुवण्णपसाहणए ॥ ३८ ॥** वंशस्था ।

प्रथमगजेन्द्रद्वितीयविनियुक्तशरासने तृतीयादर्शनिके[3]
कुरु चतुर्थमुग्धकरपल्लवे स्फुटपञ्चमस्यन्दने ।
वंशस्थायाः विराम(मे) रसनूपुरौ कृतषष्ठतुरंगमे
पादे पूर्णचन्द्रसा(सौ)म्याननने बहुवर्णप्रसाधने ॥ ३८ ॥

वंशस्थायाः पादे विरामे अन्त(न्ते) [रस]नूपुरौ कुरु । कर इत्यर्थः । किंभूते । प्रथमे गजेन्द्रो यस्य द्वितीये च यस्य विनियुक्तं शरासनं स प्रथमगजेन्द्रद्वितीयविनियुक्तशरासनः । तृतीये तथा वज्रं यस्य चतुर्थं करपल्लवो अन्तगुरुर्यस्य । तथा पञ्चमे स्यन्दनो यस्य तथा षष्ठे च कृतस्तुरंगमो यस्य तस्मिन् ॥ ३८ ॥

[**पढम** इति] ।

**पढमगअंदवीअविणिउत्तसरासणए**
**तइअणिरूविआसिसचउत्थतुरंगमए[4] ।**
**पाए देसु रअणमालाइ मणोहरअं**
**पंचमअं वरोरु विरमे करपल्लवअं ॥ ३९ ॥** रत्नमाला ।

**सत्ततीसं दुवईओ मत्तागणसमाओ[5] सम्मत्ताओ ।**

प्रथमगजेन्द्रद्वितीयेविनियुक्तशरासने तृतीयनिरूपितासिसचतुर्थतुरंगमे ।
पादे देहि रत्नमालायाः मनोहरं पञ्चमं वरोरु विरामे करपल्लवम् ॥ ३९ ॥

चतुर्मात्रपञ्चमात्रद्वयचतुर्मात्राः करपल्लवमन्तगुरुमिति रत्नमालायाः पादे देहीति तात्पर्यम् ॥ ३९ ॥

एवमेताः सप्तत्रिंशद् द्विपद्यो मात्राभिर्गणैः समपादचतुष्टयत्वान्मात्रागणसमाः । इदानीं सप्त गणसमा उच्यन्ते । यासां गणैरेव साम्यं न मात्राभिः ॥

**भूसणअं** इति ।

**भूसणअं रसो य पमुहे पुणो अ तुरअओ अ**
**त[इ]ओ पत्थिओम्व(व्व) णिअमेण होइ विप्पओ व्व ।**

---

१ सरासणए Com. २ Com. seems to read वंसत्थइ विरमइ रसणेउरआ. ३ तृतीयासरिके AB. ४ तुरंगममए AB.
५ मत्तामत्तागण० AB. ६ [illegible]

मंतिअओ पुणोवि अविरुद्धथणतुरंगओ अ
बाणो णेउरं च चिंताइ सुअणु पाअअम्मि ॥४०॥ चिन्ता ।

भूषणं रसो वा प्रमुख(खे) पुनरपि तुरगश्च तृतीयः पार्थिवो वा नियमेन भवति विप्रो वा ।
मन्त्री [पुन]रप्यविरुद्धस्तनतुरंगश्च बाणो नूपुरश्चित्राया भवति [सुतनु] पादे ॥ ४० ॥

चित्रायाः पाद(दे) प्रथमं गुरुर्भवति रसो वा । रसो लघुत्व(द्व)यमिति एकं स्थानम् । द्वितीयतु(स्तु)रंगः सामान्येन चतुर्मात्रः । तृतीयः पार्थिवो मध्यगुरुर्वा विप्रः सर्वलघुर्वा नियमेन भवति । पश्चान्मन्त्री सामान्येन चतुर्मात्रः पञ्चमात्रो वा । अत एव मात्राभिर्विषमत्वाद्गणैरेव साम्यमासाम् । यस्मान्मन्त्रिगणे सति । कस्यचित्पादस्य मात्राश्चतस्रो घटन्ते कस्यचिच्च पञ्च इति । अनन्तरं मन्त्रिणः पश्चादविरुद्धस्तनो मध्यगुरुसहितस्तुरंगमो भवति । पश्चादपि बाणनूपुरौ पञ्चमात्रगणगुरू चेति चित्रायाः पञ्चमात्रा च (?) सामान्येन भेदलक्षणम् ॥ ४० ॥

तिण्णि इति ।

तिण्णि पुरोधअअआ धअग्गअं
पाएसु चउसुंपि विहत्तअं ।
वयणेण तुलिअससिविंबए
सिद्धीअ सआ पसअच्छिए ॥४१॥ सिद्धी ।

त्रयः पुरोहिता ध्वजाग्रं पादेषु चतुर्ष्वपि विभक्तम् ।
वदनेन तुलितशशिबिम्बे सिद्धेः सदा [प्रसृताक्षि] ॥ ४१ ॥

[सिद्धेः] पादेषु त्रयश्चतुर्मात्राः पञ्चमात्रा वा सामान्येन भवन्ति । तेन प्रत्येकमेतद् द्वादशविकल्पं मध्यगुरुं विनेति । अनन्तरं ध्वजाग्रमन्ते त्रिमात्रमन्तगुरुमिति यस्याः पादेषु विभक्ते(क्तं) विभागेन स्थापितं रचितम् ॥ ४१ ॥

जीसे होइ इति ।

जीसे होइ पुरोहिओ वारणओ अ सवाणओ
पाइक्को अ सजोहओ विरमम्मि सत्तिदंडओ ।
[सा] राअहंसगमणिए पंचमबीइअट्टा(ठा)णए
अविरुद्धभूमिणाहए भद्दित्ति णाम दुवइया ॥४२॥ भद्रा ।

यस्या भवति पुरोहितो वारणश्च सबाणः पदातिश्च सयोधो विरामे शक्तिदण्डः ।
तां(सा) राजहंसगमने पञ्चमद्वितीयस्थाने अविरुद्धभूमिनाथे भद्रेति नाम द्विपदिका ॥ ४२ ॥

सा भद्रा नाम द्विपदिका यस्या आदौ पुरोहितः गणः सामान्येन भवति । अनन्तरं सबाणो वारणः । पश्चात्पदातिः योधेन सह विरामेन्ते च शक्तिदण्डः । पञ्चमे तथा द्वितीये स्थाने भूमिनाथे

---

१ चित्रा Com. २ मध्यगुरोर्वा विषयः सलघुर्वा AB. ३ पादश्चतुर्थमात्रश्चतस्रो घटांते कस्यचिच्च पंचम इति AB.
४ संयोगो AB. ५ रावणः AB. ६ पदायोवेग सह AB.

सति अविरुद्धे भवतीयम् ॥ ४२ ॥

पमुहे इति ।

स(प)मुहम्मि पुरोहिआण जुअलअं
पत्थिवओ विप्पउव्व तइअओ ।
जीसेवि [होइ] चउत्थवाणओ
सा गन्धारित्ति णाम दुवइआ ॥ ४३ ॥ गन्धारी ।

प्रमुखे पुरोहितयोर्युगलकं पार्थिवो विप्रो वा तृतीयकः ।
यस्याश्चतुर्थो बाणः सा गान्धारीति नाम द्विपदिका ॥ ४३ ॥

यस्याः प्रमुखे पुरोहितयोर्युगलकं द्वितयं भवति तृतीयः पार्थिवो विप्रो वा बाणश्चतुर्थ इति ॥४३॥

जीसे पा[अ]ए इति ।

जीसे पाअए पंकयवअणिए दूरअं सवणसुहावअम्मि
ससलिलवद्धए सण्णअवाहिए मुद्धिए अन्तिमरअणम्मि ।
पढमवीअओ अ तइअचउत्थओ पंचमछट्ठअसत्तमो अ
होइ पुरोहिअत्ति विंवोठिए छट्ठ(छंद)अम्मि जाणसु मालिणित्ति ॥ ४४ ॥ मालिनी ।

यस्याः पादे पङ्कजवदने दूरं श्रुतिसुखावहे
सललितबन्धे संनि(न)तबाहो मुग्धे अन्तिमरत्ने ।
प्रथमद्वितीयस्तृतीयचतुर्थ(र्थः) पञ्चमषष्ठकं(क)सप्तमश्च
भवति पुरोहितस्तां विम्बोष्ठिके छन्दसि जानीहि मालिनीति ॥ ४४ ॥

तां मालिनीति जानीहि । यस्याः सप्तसु स्थानेषु पुरोहितो भवति पादे । किंभूते । अन्तिमं रत्नं यस्य । सन्नतौ परिवर्तुलौ बाहू यस्यास्तथा विम्बस्य लोहितफलविशेषस्य सदृशे ओष्ठौ यस्यास्तस्या आमन्त्रणम् । ह(दू)रमत्यर्थम् ॥ ४४ ॥

कद्दूअ इति ।

कद्दूअ होइ पाअए
वीआविरुद्धथणअए ।
मंतिम(अ)ओ सदु(तु)रंगओ
विरमे अ सत्तिदंडओ ॥ ४५ ॥ कद्दू ।

कद्रुवा भवति पादे द्वितीयाविरुद्धस्तने ।
मन्त्री सतुरंगमो विरामे [च] शक्तिदण्डः ॥ ४५ ॥

कद्रुवाः पादे सामान्येन [मन्त्री] प्रथमगणो भवति पश्चाच्चतुर्मात्रपञ्चमात्रौ ॥ ४५ ॥

मंतिअ इति ।

---

१ प्रथम AB. २ द्वितीयो AB.

मंतिअओ सतुरंगओ तइ[अ]रहंगअम्मि
सोच्चिअ होइ चउत्थओ पंचमबाणअम्मि ।
छट्ठो अ पउमराअओ मणहरबंधअम्मि
जाणसु पंकअवअणिए ललिआपाअअम्मि ॥ ४६ ॥ ललिता ।

इय दुवईओ गणसमाओ सम्मत्ताओ ॥

मन्त्री सतुरंगस्तृतीयरथाङ्गे स एव भवति चतुर्थः पञ्चमबाणे ।
षष्ठश्च पद्मरागो मनोहरबन्धे जानीहि पङ्कजवदने ललिता प(पा)दे ॥ ४६ ॥

तुरंगमसहितं मन्त्रिणं प्रथमं जानीहि । अनन्तरे तृतीये पञ्चमात्रं ततः स एव तुरंगश्चतुर्थो भवति । पञ्चमो बाणो यस्मिन्निति पादविशेषणम् । अन्ते पद्मरागो गुरुर्यस्येति च । ॥ ४६ ॥

एवं सप्त गणसमा उक्ताः । इदानीमर्धसमाः आह—विउलाइ इति ।

विउलाइ पाआ
करसुरगयएहिं होंति ।
णेउ(णव)रं समा से
पमुहट्ठिअवारणिंदा ॥ ४७ ॥ विपुला ।

विपुलायाः पादाः करसुरगजैर्भवन्ति ।
केवलं समावस्याः प्रमुखस्थितवारणेन्द्रौ ॥ ४७ ॥

विपुलायाः सर्वे करेणान्तगुरुणा [चतुर्मात्रेण] तथा सुरगजेनादिलघुना पञ्चमात्रेण भवन्ति । केवलं च समा(मौ) द्वितीयचतुर्थौ अस्याः प्रमुखे स्थिते[न] वारणेन्द्रेण[2] चतुर्मात्रो(त्रे)[णो]पलक्षितौ । अतएव चार्धसमाः । प्रथमद्वितीयपदरचितार्धस्य तृतीयचतुर्थविरचितापरार्धेन[3] सादृश्यम् । णवरमिति निपातः केवलार्थः ॥ ४७ ॥

रअणाअरे गओ[4]
पत्थिवओ सह(हा)रओ ।
चवलाइ जुज्ज(ज्झ)ए
रहकणआ धअग्गअं ॥ ४८ ॥ चवला[चपला] ।

रत्नाकरे गजैः पार्थिवः[5] सह(हा)[रः ।
चपलाया युद्धे रथकनकौ] ध्वजाग्रम् ॥ ४८ ॥

चपलायाः रत्नाकरे विषमपादस्थाने प्रथमं गजः कर्तव्यः पश्चात्पार्थिवो मध्यगुरुः । अन्ते च हारः । युद्धे पुनः समस्थाने रथकनकौ च चतुर्मात्रपञ्चमात्रौ । कनक आयुधविशेषः । अन्ते च ध्वजाग्रम् । रत्नाकरः सागरः ॥ ४८ ॥

रह(य)णाअर इति

---
१ उविलाए AB. २ वरुणेन्द्रेण AB. ३ तासरावेन AB. ४ गरओ AB. ५ राजपार्थिवः AB.

रयणाअर[अ]म्मि
रहतुरआ हारओ अ।
समरे स(सु)मुहीअ
जोहजुअं सुरगंवो अ॥ ४९॥ सुमुखी।

[1]रत्नाकरे रथतुरगौ हारश्च।
समरे सुमुख्याः योधयुगं[2] सुरगजश्च॥ ४९॥

स(सु)मुख्याश्चतुर्मात्रद्वयं गुरुश्च। विषमपादयोस्तु पञ्चमात्रेणादिलघुना आधिक्यमिति तात्पर्यम्॥ ४९॥

कुण हार इति

कुण हारविराम तिअं तो
सारसिआई(इ) कराण समुद्दे।
समरंगणयम्मि अ मुद्धे
पाअ अ तिण्णि मणीण जुअं च॥ ५०॥ सारसी।

कुरु हारविरामे त्रिकं तावत् सारसिकायाः कर(रा)णां समुद्रे।
समराङ्गणे च मुग्धे पादत्रिकं मण्योर्युगं[3] च॥ ५०॥

हे मुग्धे सारसिकायाः तावत्कर्णाणामन्तगुरूणां[4] त्रिकं हारविरामं कुरु समुद्रे विषमपादे। समराङ्गमे(णे) समे पादानामादिगुरूणां त्रिकं गुरुद्वयं[5] चान्ते। ता तावदर्थे॥ ५०॥

कुण भामिणि इति।

कुण भामिणिआएँ पिए
सारसिआइ कराण तिअं।
समरंगणअम्मि अ सि(से)
पायं[6] अ तिण्णि सणेउरआ॥ ५१॥ भामिनी।

कुरु भामिन्याः प्रिये सारसिकायाः करौणां त्रिकम्।
समराङ्गणे चास्याः पादत्रिकं च सनूपुरम्॥ ५१॥

सारसिकायाः संबन्ध(न्धि) करत्रिकं[7] पादत्रिकं च गुर्वन्तं विषम[सम]पादविषये[8] विधेहि। सारसिकैवान्तेगुरुणा रहिता भामिनी भवतीत्यर्थः॥ ५१॥

पाअतिअं इति।

---

१ वश्रुति ? Com. २ योगयोगं AB. ३ समयोः AB. ४ कारणां AB. ५ गुरुगुरुद्वयं AB. ६ पायतिअं च सणेउरअं Com. ७ कररणाधिकम् AB. ८ विधेहि विधेहि AB.

पाअं अ तिण्णि सणेउरआ
रअणायरअम्मि पसण्णिअए ।
स(सं)जुअअम्मि अ होइ पिए
करपल्लवआण चउक्कमिह ॥ ५२ ॥ प्रसन्ना ।

पादत्रिकं च सनूपुरं रत्नाकरे प्रसन्नायाः ।
संयुगे च भवति प्रिये करपल्लवानां चतुष्कमिह ॥ ५२ ॥

प्रसन्नायाः समपादस्थाने पादत्रयं नूपुरेना(णा)न्तस्थितेन सह वर्तमान(नं) विधेयम् । समस्थानेऽन्तगुरवश्चत्वारः कार्याः । संयुगः संग्रामः । रत्नाकरः समुद्रः ॥ ५२ ॥

जोहरह इति ।

जोहरहंग संदणआ
णंदाइ हुवन्ति साअरए ।
तुरअगअंदअ(प)त्थिवआ
तस्सेअ धवो अ संजुवए ॥ ५३ ॥ नंदा ।

योधरथाङ्गस्यन्दनाः नन्ता(न्दा)या भवन्ति सागरे ।
तुरगगजेन्द्रपार्थिवास्तस्या एवं ध्वजश्च संयुगे ॥ ५३ ॥

नन्दायाः सागरे विषमे चतुर्मात्रवर्ण(गण)योर्मध्ये पञ्चमात्रो भवति । तस्या एव संयुगे तुरग-गजेन्द्रपार्थिवाश्च चतुर्मात्रा अविशेषेण तृतीयश्च मध्यगुरुरित्यर्थः । तस्मिंश्च समे ध्वजोऽन्ते कार्यः । अत्र सागरे सामान्येन चतुर्मात्रोऽन्ते विहितस्तथाप्यन्तगुरुष्कार्यः । न केवलमिह यावत्सर्वत्रैवान्ते यत्र चतुर्मात्रादिगणो विधीयते तत्रान्तगुरूणामेव विधानं नान्येषामित्यस्माभिरुदाहरणैश्चाभ्यूहितम् । अन्यत्र गज एव गजेन्द्रः इति चतुर्मात्रस्यैव विधाने(नं) न पञ्चमात्रस्यादिलघु(घो)रित्येतदप्युदाहरणाभ्यूहितमस्माभिः ॥ ५३ ॥

सागरए इति ।

साअरि(र)ए गइंदओ
सेआइ रहंगअं धओ ।
संजुअए तुरंगओ
जोहो अ सपत्थिओ मणी ॥ ५४ ॥ श्वेता ।

---

१ पाअंतिअं च सणेउरअं Com. २ पादासयो AB. ३ वश्रुति ? ववोओ अ संजुवए AB. ४ वध AB. ५ चविशेषणतृतीयाश्च AB. ६ ध्वजेन्ते कार्यं AB.

इअ दुवईओ अद्धसमाओ समत्ताओ। इअ कइसिट्ठवित्तजाईसमुच्चए तइओ णिअमो सम्मत्तो ॥

सागर(रे) गजेन्द्रः श्वेताया रथाङ्गं ध्वजा(ज)ः।
संयुंगे[1] तुरंगमो योधश्च सपार्थिवो मणिः ॥ ५४ ॥

श्वेतायाः विषमे[2] चतुर्मात्रपञ्चमात्रत्रिमात्राः[3] संयुंगे[4] तु त्रयश्चतुर्मात्राः गुरुश्च। तत्र तृतीयश्च-चतुर्मात्रो मध्यगुरुरित्यर्थः ॥ एवमेताः साकल्येन द्विपञ्चाशद् द्विपद्य उक्ताः ॥ ५४ ॥

## इति तृतीयो नियमः।

---

१ संयोगे A. २ विषमेव चतु० B. ३ द्विमात्राः AB. ४ संयोगे AB.

# चतुर्थो नियमः ।

इदानीमवसरप्राप्तां गाथामाह—**अट्ठमअं** इति ।

**अट्ठमअं सोलहमं च कुण मणी गंधअं चउद्दहमं ।**
**छट्ठं गाहाइ थणं दिअं व परिसेसजोहाइ ॥ १ ॥**

**अष्टमं षोडशं च कुरु मणिं गन्धं च चतुर्दशम्**
**षष्ठं गाथायाः स्तनं द्विजं वा परिशेषयोधायाः ॥ १ ॥**

गाथाया अर्धयोपि(र्हि) साकल्येन षोडश स्थानानि भवन्ति । तत्राष्टमं षोडशं गुरुं कुरु गन्धं[1] लघुं च चतुर्दशं षष्ठं च स्तनं मध्यगुरुं द्विजं लघुचतुष्टयं वा । किंभूतायाः । परिशेषाः अष्टम-षोडशचतुर्दशषष्ठेभ्यो[2][3] निखिला योधा[4] यस्याः सा । तथा तस्या अत्र च 'गाहाखंध' (१.२३) इत्यादिना समविषमयोर्मध्यगुर्वो(रो)र्विधिप्रतिषेधौ । उदाहरणम्[5] ।....॥ १ ॥

अस्या एवेति भेदप्रदर्शनार्थमाह—**गाहा** इति ।

**गाहापत्थारमहोर्वहिस्स तीसक्खरा समारंभे ।**
**जाणह पंचावण्णक्खराइं तस्सेअ विरमम्मि ॥ २ ॥**

**गाथाप्रस्तारमहोदधेस्त्रिंशदक्षरां समारम्भे ।**
**जानीहि पञ्चपञ्चाशदक्षरां च तस्यैव विरामे ॥ २ ॥**

महोदधेभिन्नम(?)प्रस्तारः षष्ठे नियमे उक्तः तस्य समारम्भे त्रिंशदक्षरां गाथां जानीहि । विरामेऽन्ते चास्य पञ्चपञ्चाशदक्षरामिति । अनेन प्रकारेण गाथाया जातय उच्यन्ते यथा मनुष्यत्वस्य ब्राह्मणाद्याः । न केवलमिह यावत्सर्वत्रैव मात्रावृत्ते जातिमात्रस्य लक्षणमुच्यते । एतच्च षष्ठ एव प्रतिपादयिष्यामः ॥ २ ॥

अस्य चाद्यन्तवर्तिनो गाथाद्वयस्य स्वरूपमाह—**सत्तावीसं** इति ।

**सत्तावीसाँ हारा जीसे दीसंति तिण्णि गंधाइं ।**
**सा गाहाणं गाहा आई तीसक्खरा लच्छी ॥ ३ ॥**

**सप्तविंशतिर्हारा यस्याः दृश्यन्ते त्रीणि गन्धानि ।**
**सा [गाथानां] गाथा आद्या त्रिंशदक्षरा लक्ष्मीः ॥ ३ ॥**

सा गाथा लक्ष्मीर्नाम सर्वासां गाथानां प्रथमा । किंभूता । यस्या हारा गुरवः सप्तविंशतिर्भ-वन्ति द्वयोरप्यर्धयोर्लघूनि त्रीणि । षष्ठे स्थाने स्तने लघुद्वयस्य संभवाच्चतुर्दशो चैकस्येति ॥ ३ ॥

द्वितीयासौ पञ्चपञ्चाशदक्षरा तस्या इदानीं लक्ष्यद्वारेण स्वरूपमाह—**गगणअल** इति ।

---

१ गन्धीं AB. २ गन्धे AB. ३ मष्टेभ्यो AB. ४ यथा AB. ५ As in Chapter III, I drop even here the formulaic representation as it is very unreliable. ६ वश्रति. ७ सत्तावीसं Com. ८ गणनां AB.

**गयणअलविसअपसरिअमणहरसासिकिरणणिअरहिअतिमिरं ।**
**अणुहवसु सुहअ बहुमअ सललिअअपरसिअ रअरअणिं ॥ ४ ॥** हंसवधूः ।

गगनतलविषयप्रसृतमनोहरशशिकिरणनिकरहततिमिराम् ।
अनुभव सुभग बहुमत सललित बहुरसिक रतरजनीम् ॥ ४ ॥

कस्यचिन्नायकस्य कुपितप्रसन्नायां नायिकायामुपालम्भगर्भं वयस्यावचनम् । हे सुभग इमां रतोपलक्षितां रजनीमनुभव । अस्यां रजन्यां सुखेन विहरेत्यर्थः । किंभूतां रजनीम् । गगनतलविषये नभोभागोदरे प्रसृत उद्गतो योऽसौ मनोहरः शशी तदीयेन किरणनिकरेण रश्मिसमूहेन हतं तिमिरं यस्यां तामेवंविधाम् । हे बहुमत अनेकैश्चिन्तित । सललित सविलास । बहुरसिक अस्थिरप्रकृते । त्रीण्येतान्यामन्त्रणपदानि । एतज्जातिषड्विंशकस्योपलक्षणं गाथायुगलकम् ॥ ४ ॥

यथा चैताः षड्विंशतिर्भवन्ति तथा दर्शयन्नाह—**साअर** इति ।

**पत्थारसाअरवरे रयणे लुत्ते रसम्मि वड्ढंते ।**
**जाणह कमेण कंते छव्वीसं होति गाहाओ ॥ ५ ॥**

सागरप्रस्तारवरे रत्ने लुप्ते रसे वर्धमाने ।
जानीहि क्रमेण छन्दसि षड्विंशतिर्भवन्ति गाथाः ॥ ५ ॥

सागरश्चासौ प्रस्तारः सागरप्रस्तारः (तस्मिन्) लक्ष्मीं स्थापयित्वा ततः प्रथमगुर्वक्षरे स्थान्यादेशभावेन रसेन लुप्ते करे सत्येकत्रिंशदक्षरा भवति द्वितीया । अनन्तरं द्वितीये रत्ने रसेन लघुद्वयेन लुप्ते सति च कृतौ (?) द्वात्रिंशदक्षरा भवति ॥ ५ ॥

**लच्छी ऋद्धि(द्धी) बुद्धी लज्जा विज्झू अ मोलई दीही ।**
**गोरी राई जोण्हा छाआ कंती महामई कित्ती ॥ ६ ॥**
**मुद्धा मणोहरा रोहिणी विसाला सुहा सिवा हरिणी ।**
**चक्काई सारसिआ कुररी हंसी अ हंसवहुअत्ति ॥ ७ ॥**
**दोहिं गीईहिं गाहाणामाइं भणिआइं ॥**

[लक्ष्मी]र्ऋद्धिर्बुद्धिर्लज्जा विद्या क्षमा च दीर्घा च ।
गौरी राजिर्ज्योत्स्ना छाया कान्तिर्महामतिष्कीर्तिः ॥ ६ ॥
मुग्धा मनोहरा रोहिणी विशाला सुधा [शिवा] हरिणी ।
चक्रवाकी सारसिका कुररी हंसी च हंसवधूरिति ॥ ७ ॥

पूर्वोक्तस्यैव रत्ने लुप्ते रसे च वर्धमान इत्येतस्य प्रकारान्तरमाह—**कण्णकर** इति ।

**कण्णकरचलणविप्पंसएहिं पढमट्ठिएहिं जाणिहिह ।**
**जहसंखं भ(स)व्वाणं जाईणं वण्णपरिवाडिं ॥ ८ ॥**

---

१ हअ Com. २ सललिअ बहुरसिअ Com. ३ णभोगोदरे. ४ अनेकचिन्त AB. ५ सलिल AB. ६ साअरपत्थारवरे Com. ७ छंदे Com. ८ Both A. and B. add सागरप्रस्तारश्चासौ सागरप्रस्तारः ९ विज्जा खमा अ दीही अ Com. १० मणोहरमा AB.

कर्णकरचरणविप्रांशकैः प्रथमस्थितैर्जानीहि ।
यथासंख्यं सर्वासां जातीनां वर्णपरिपाटीम् ॥ ८ ॥

जातीनां लक्ष्म्याद्यानां वर्णपरिपाटीमनेन क्रमेण ज्ञास्यथ । प्रथमं कर्णेन गुरुद्वयेन स्थितेनानन्तरं करेणान्तगुरुणा पश्चाच्चरणेनादिगुरुणा ततोऽपि विप्रांशकेनेति एवं प्रत्येकमंशकं यावद् गाथा हंसवधूः तावत्कार्यम् । अत्र च नांशका विवक्षिता इति । अपि तु क्रमेण रत्नस्य रसेन लोप इति । तेन करचरणयोरप्याविवक्षा । सर्वथा गुरोर्लघुद्वयेन लोपादक्षरवृद्धिः प्रयोजनम् । अन्ये पुनरेतद्योगात् गाथाप्रभेदाः कोटिशः सन्ति तत्परमिति कथयन्ति । तदपि साधीयः । अस्मिंस्तु करचरणयोर्विवक्षैव । एतत् षष्ठानुवादपरं तत्र विस्तरेण प्रदर्श्यमानत्वात् ॥ ८ ॥

स्कन्धकलक्षणमाह—पंचण्ह इति ।

**पंचण्ह सया पुरओ दुण्ह अ मग्गेण वारणाण णियमिअओ ।**
**जह दइए पुव्वद्धे तह पच्छद्धेवि[1] खंधअस्स णरिंदो ॥ ९ ॥**
**खंदएण खंदअस्स लक्खणं भणिअं ॥**

पञ्चानां सदा पुरतो द्वयोश्चाग्रे वारणानां नियमितः ।
यथा दयिते पूर्वार्धे तथैव पश्चार्धे[ऽपि स्कन्धकस्य नरेन्द्रः] ॥ ९ ॥

पूर्वार्धपश्चार्धे स्कन्धकस्य सदृशे कर्तव्ये इत्यर्थः ॥ ९ ॥

गाथावत्स्कन्धकजातयो भवन्तीत्याह—छव्वीसं इति ।

**छव्वीसं जह गाहा रअणे लुत्ते रसम्मि वड्ढंते ।**
**एक्कोणत्तीसं खंधअस्स णामाइं[2] तह अ पिए ॥ १० ॥**

षड्विंशतिर्यथा गाथा रत्ने लुप्ते रसे च वर्धमाने ।
एकोनत्रिंशत्स्कन्धस्य भेदास्तथैव ॥ १० ॥

स्पष्टार्था गाथा ॥ १० ॥

एतेषां नामान्याह—पवण इति ।

**पवणरविधणअहुअवहसुरणाहसमुद्दवरुणससिसेला ।**
**महुमाहवमअणजअन्तभमरा(र)सुअसारसमज(ऊ)रा ॥ ११ ॥**
**हरिहरिणहत्थिकाओ[3] कुम्मो[3] णअविणअविक्कमोच्छाहा ।**
**धम्मत्थकामसहिआ णवी(त्ती)सअ खंधआ होंति ॥ १२ ॥**
**खंदअणामाइं ॥**

पवनरविधनदहुतवहसुरनाथसमुद्रवरुणशशिशैलाः ।
मधुमाधवमदनजयन्तभ्रमरशुकसारसमयूराः ॥ ११ ॥

---

१ मसुकं AB. २ भेआ[पिए]तहवि Com. ३ काअंबकुन्दणअ० Com.

हरिहरिणहस्तिकदंबकुंदनयविनयविक्रमोत्साहाः ।
धर्मार्थकामसहिता एकोनत्रिंशत्स्कन्धका भवन्ति ॥ १२ ॥

गीतिलक्षणमाह—**गाहा** इति ।

**गाहापुव्वद्धं जीअ सुअणु पुव्वद्धपच्छिमद्धाइं ।**
**सा पिंगलेण गीइत्ति दाविआ सव्वछंदवित्ताण ॥ १३ ॥**

गाथापूर्वार्धमिव यस्याः पूर्वार्धपश्चार्धे ।
सा पिङ्गलेन गीतिरिति दर्शिता सर्वछंदोविदाम् ॥ १३ ॥

गाथैव गीतिः । इयांस्तु विशेषः । चतुर्दशेऽपि यत्र लघोर्विधानं तत्रास्या मध्यगुरुर्विधेय इति सर्वच्छन्दोविदां प्रथमं पिङ्गलेन दाविआ दर्शिता प्रकटीकृता ॥ १३ ॥

किंच **गाहापच्छद्धं** इति ।

**गाहापच्छद्धं विअ पुव्वद्धं पच्छिमद्धं च ।**
**जीसे सा उवगीई तेणं चिअ लक्खणे भणिआ ॥ १४ ॥**

गाथापश्चार्धमिव पूर्वार्धं पश्चिमार्धं च ।
यस्याः सा उपगीतिस्तेनैव लक्षणे भणिता ॥ १४ ॥

तेनैव पिङ्गलेन सा स्वस्मिन् लक्षणे उपगीतिः भणिता । यस्या गाथा[याः] पश्चार्धेन सदृशमेव द्वयेपि लक्षणं भवति । षष्ठचतुर्दशयोर्लघुरित्यर्थः ॥ १४ ॥

एवं द्विपद्यादिवृत्तजातिषट्कमुक्तम् । इदानीं विलासिन्यादीनामाह—**मणिविराम** इति ।

**मणिविरामबाणाण मज्झओ**
**घित्तुआण दो दे सिलीमुहो(हे) ।**
**पत्थिवं च तइअं विलासिणी-**
**पाअअम्मि फुडणेउरिल्लिए ॥ १५ ॥**

मणिविरामबाणानां मध्याद् गृहीतानां द्वौ देहि शिलीमुखौ ।
पार्थिवं च तृतीयं विलासिनीपादे स्फुटनूपुरवति ॥ १५ ॥

बाणाः पञ्चमात्रा गणाः । तेषां त्रयो मणिविरामा गुर्वन्ताः पञ्च लघुविरामाः । त्रयः गुर्वन्ताः सुरगजाद्यास्तेषां गृहीतानां मध्यादन्यतमौ द्वौ पञ्चमात्रौ देहि । ततस्तृतीयः पार्थिवः । किंभूते पादे । स्फुटः प्रकटो नूपुरो गुरुन्ते यस्य ॥ १५ ॥

**पढमा** इति ।

**पढमा बीआ हुअंति जोहआ**
**तइअणिरूविअणरिंदविप्पआ ।**

१ पुव्वद्धं विअ जीए पुव्वद्धं Com. २ छन्दोविद AB ३ लक्षणेन AB ४ गृहीतानां AB ५ स्फुरति नूपुरवति AB.

चउगणघडिआ विरामवाणआ
हाेंति अ णिव्वाइआइ पाअआ ॥ १६ ॥

प्रथमकद्वितीयौ भवतो योधौ तृतीयनिरूपितनरेन्द्रविप्राः ।
चतुर्गणघटिता विरामबाणा भवन्ति [च] निर्वापितायाः पादाः ॥ १६ ॥

निर्वापिताया एवंभूताः पादाः भवन्ति । एवं प्रथमद्वितीयौ[2] बाणौ भवतः । तृतीयेन च निरूपितो नरेन्द्रो[3] विप्रो वेति पादविशेषणम् । स्पष्टमन्यत् ॥ १६ ॥

सतुरंग इति ।

सतुरंगरहस्स देसु पुरओ
णिअमेण थणं व विप्पअं वा ।
विरमे अ करं च कण्णअं व
सुंदरि वाणासिआइ पाए ॥ १७ ॥

सतुरङ्गरथस्य देहि पुरतो नियमेन स्तनं वा विप्रं वा ।
विरामे [च] करं वा कर्णं वा सुन्दरि बार्णासिकायाः पादे ॥ १७ ॥

सह तुरङ्गेन योऽसौ वर्तते रथस्तस्य पुरतोऽग्रे नियमेन स्तनं वा विप्रं[5] वा देहि । विरामेऽन्ते करं वा कर्णं वा । अनेन मन्दबुद्धिव्युत्पादने मुखेदोदाहरणं पर्यन्ते (?) यस्मात्स्तनस्थाने विप्रो भवत्येव । तथान्ते करकर्णवर्जमन्यस्य नैवावकाश इति ॥ १७ ॥

तुरअ इति ।

तुरअ सुअण्णआ
उवहिंवि(मि) विइण्णआ ।
सुंदरि खञ्जए
समरे रसमज्झआ ॥ १८ ॥

तुरगसुपर्णावुदधौ वितीर्णौ ।
सुन्दरि खञ्जके समरे रसमध्यौ ॥ १८ ॥

उदधौ विषमपादे तुरङ्गसुपर्णौ वितीर्णौ[7] दत्तौ । समरे समपादे रसो मध्ये येषां तौ । सुपर्णो गरुडः ॥ १८ ॥

देहि इति ।

दे सुंचामरसरूअसहारे[8]
दिट्ठिअं सरसंअम्मि णरिंदे[9] ।

१ द्वितीय० AB. २ द्वितोयौयौ AB. ३ ननरेन्द्रो AB. ४ वाणवासिकायाः AB. ५ विपुरं AB. ६ सनेन समध्यौ AB. ७ विस्तीर्णौ AB. ८ सचामर Com. ९ सरासअम्मि गअं णारिंदो AB.

मंग्गओ सुरगअस्स णिउत्ते
पाअअम्मि परिणंदिअस्स ॥ १९ ॥

देहि सचामररूपसहारे दृष्टिं संरसे नरेन्द्रे ।
मार्गतः सुरगजस्य नियुक्ते पांदे परिनिन्दितस्य ॥ १९ ॥

परिनिन्दितस्य पादे दृष्टिं देहि । किंभूते । सह चामरेण वर्तमाने तथा सरूपे सह(हा)रे च। सह रसेन वर्तते योऽसौ नरेन्द्रः तस्मिन्नपि दृष्टिं देहि । किंभूते नरेन्द्रे । मार्गतः पृष्ठतः सुरगजस्य आदिलघोर्नियुक्ते ॥ १९ ॥

**विइआविरुद्ध** इति ।

बीआविरुद्धथणहारए
आणंदिअस्स कुण पाअए ।
जोहं सरहं सतुरंगअं
विरमे अ वरोरु धअग्गअं ॥ २० ॥

द्वितीयाविरुद्धस्तनहारे आनन्दितस्य कुरु पादे ।
योधं सरथं सतुरङ्गं विरामे च वरोरु ध्वजाग्रम् ॥ २० ॥

आनन्दितस्य च पादे चतुर्मात्रास्त्रयश्चतुर्थस्तु त्रिमात्रः कार्य इति तात्पर्यम् । द्वितीये च सामान्येन मध्यंगुरोरविरोध इति ॥ २० ॥

**सतुरंगम** इति ।

सउरंगमए सवांरणे संजोहए
विहआहिवइं व विसहरं व मुद्धिए ।
ठविअम्मि ठंवे अंतिमए(ध)अवडावए
महुरक्खरए कीलणअस्स पाअए ॥ २१ ॥

सतुरङ्गमे [स]वारणे [स]योधे विहगाधिपतिं वा विषधरं वा मुग्धे ।
स्थापिते देहि अन्तिमध्वजपताके मधुर(रा)क्षरे क्रीडनकस्य पादे ॥ २१ ॥

क्रीडन[क]स्य [पादे] चतुर्मात्रगणत्रये स्थापिते मध्यलघोश्चतुर्थगुरोर्वा स्थितिर्विधेयेत्यर्थः । अन्तिमे(मा) ध्वजपताके(का) यस्येति पादविशेषणम् । विहगाधिपतिर्गरुडः । विषधरो भुजगाधिपः ॥ २१ ॥

**हाररसाण** इति ।

हाररसाण तिअम्मि णअंगि विइण्णे
देसु सणेउर[रू]अजुअं चं पुंरिल्लं

---

१ समग्गओ AB. २ सरथे AB. ३ परे AB. ४ द्वितीयेन AB. ५ मध्येगुरुः AB. ६ सवारणज्जेहए AB. ७ देसु Com. ८ चतुर्थोगुरोर्वा AB. ९ सतुरङ्गं AB.

चामरअं कडअं च वरोरु विरामे
दूरसमुज्जलअम्मि तरंगअपाए ॥ २२ ॥

हाररसयोस्त्रिके नताङ्गि वितीर्णे देहि[1] सनूपुररूपयुगं च पौरस्त्यम् ।
चामरं कटकं च वरोरु विरामे दूरसमुज्ज्वले तरङ्गकपादे ॥ २२ ॥

हारश्च रसश्च हाररसौ तयोस्त्रिके वितीर्णे दत्ते त्रिःकृत्वः चरणे स्थापित इत्यर्थः । पश्चात्सनूपुररूपयुगं च पौरस्त्यं पुरोभवं देहि चरणमेव । विरामेन्ते च चामरकटके गुरुद्वयमित्यर्थः । वरौ श्रेष्ठौ ऊरू यस्याः । आमन्त्रणम् ॥ २२ ॥

**भवति** इति ।

भवति मुद्गरो हरिर्योधस्तस्याग्रतो मौक्तिकं प्रिये ।
जातु सा(श)म्यायाश्चतु[2]र्भागं मात्राधिकं विद्धि पार्थिवे ॥ २३ ॥

शम्या[3]याः पाद एवं[3]विधो भवतीति विद्धि जानीहि यस्य प्रथमं मुद्गरः पञ्चमात्रो भवति पश्चाद्धरिश्चस्तदनु योधः । तस्य च योधस्य अग्रतः पुरो मौक्तिकं गुरु किं च पार्थिव(वे) मध्यगुरौ सतु(ति) जातु कदाचित्तं चतुर्भागं मात्रयैक[5]याधिकं विद्धि । पार्थिवस्थाने कदाचित्पञ्चमात्रो विधेय इत्यर्थः । अनेन वचनेनोदाहरणेन [6]चेदं दर्शितमाचार्येण यथा सामान्यसंज्ञयापि मध्यगुरुरस्मिन् ग्रहीतव्यमि(इ)ति । अपरमपि अनेनोदाहरणेन दर्शितं यत् संस्कृतेनैतच्छम्यं वृत्तं, न बध्यते भाषान्तरेणेति ॥ २३ ॥

**विसमट्ठाण** इति ।

विसमट्ठाणाविरुद्धस्तनतइअदिअणरिंदआ
णिद्दिट्ठा कउ(इ)वरेहिं रविओ(ति)रहवीसामआ ।
ठवेसु अहिअक्खराइ छं[7]ट्ठुणिरूविअवाणआ
अंसावि हु सेसआ गअतुरअएहिं णिबद्धआ ॥ २४ ॥

विषमस्थानाविरुद्धस्तनतृतीयद्विजनरेन्द्राः निर्दिष्टाः कविवं[8]रैः रवित्रयोदशविश्रां[9]माः ।
स्थापयाधिकाक्षराया विरामनिरूपितबाणाः अंशकाँ[10] अपि शेषाँ[11] गजतुरगैर्निबद्धाः ॥ २४ ॥

अधिकाक्षराया एवंभूता ये अंशका निर्दिष्टास्तान्स्थापय । विष[म]स्थानेष्वविरुद्धो मध्यगुरुर्येषाम् । अन्यच्च रविभिर्द्वादशभिस्तथा त्रयोदशभिर्यतिः पदसमाप्तिर्येषामिति षष्ठे च निरूपितो बाणो येषां ते तथा । अन्यच्च तृतीयषष्ठी[12]भ्यां शेषा ये ते गजतुरगैः सामान्येन चतुर्मात्रैर्निबद्धाः कार्याः ॥ २४ ॥

**पढम** इति ।

---

१ विस्तीर्णे देहे AB. २ चतुर्थभाग AB. ३ सय्यायाः पादधूपंविधो AB. ४ द्धरेस्वरः AB. ५ योधेकं AB. ६ चंद्रदर्शित० AB. ७ छट्ठविरमणिरू० AB. In trans. Com. reads विरमणिरू० but explains the reading छट्ठणिरू० ८ ष्ठान AB. ९ वरैरंधेत्रयोदिसविस्रामा AB. १० अंसकविशेषा AB. ११ तांसद्विषय AB. १२ षष्ठाया: AB.

पढमचउत्थजोहरहपंचमकण्णाए
 बीअतईअहोइसुरहत्थिसुअण्णाए ।
कूला दीहवण्णएआरविलुत्ताए
 जा॑सु विस॑ग्गु होइ णक्कोडअपाआए ॥ २५ ॥

प्रथमचतुर्थयोधरथपञ्च[म]कर्णः द्वितीयतृतीयभोगिसुरहस्तिसुपर्णः ।
कूलौ दीर्घवर्णैकारविलुप्तः यस्य विसर्गो भवति नर्कुटपादः ॥ २५ ॥

एवंभूतो नर्कुटस्य पादो भवति प्रथमचतुर्थयोर्योधरथौ यस्य पञ्चमे च कर्णो गुरुद्वयं स प्रथमचतुर्थयोधरथपञ्चमकर्णः । द्वितीयतृतीययोः स्थानयोः भोगिसुरहस्तिसुपर्णा यस्य स तथा । भोगी भुजगेन्द्रः । सुरहस्ती सुरगजः । सुपर्णो गरुडः । कु(कू)ला देशीपदं पत्तिपर्यायः । तेनैतदुक्तं भवति । अन्तिमो विसर्गो दीर्घवर्णेनैकारेण विलुप्तो यस्य भवति । पादान्ते विसर्गस्य स्थान्यादेशभावेन आए इति विधेयमित्यर्थः । उदाहरणमुखेन च दर्शितं तथा पुंलिङ्गस्यैवाकारान्तस्यायं विधिर्नान्यस्येति । तथा चोक्तम्—' **अतः स आएन्दुंसि र(न)कुंटक** इति ॥ २५ ॥

**जण्णिउत्त** इति ।

जं[3] णिउत्तसरतोमरजोहतुरंगअं
 विरमअम्मि दूरुज्जलवण्णधअग्गअं ।
तं विआण सुपरिट्ठिअजइरमणिज्जअं
 छंदअम्मि छउओअरिए र॑मणिज्जअं ॥ २६ ॥

यन्नियुक्तशरतोमरयोधतुरंगं विरामे दूरोज्ज्वलवर्णध्वजाग्रम् ।
तद्विजानीहि सुपरिष्ठितयतिरमणीयकं छन्दसि छातोदरिके रमणीयकम् ॥ २६ ॥

हे छातोदरिके तद्वृत्तं अस्मिन् छन्दसि रमणीयकमिति जानीहि । किंभूतम् । यस्मिन्नियुक्ताः शरतोमरयोधतुरंगाः पञ्चमात्रद्वयं चतुर्मात्रद्वयं चेत्यर्थः । तोमरः प्रहरणविशेषः । विरामेन्ते दूरमत्यर्थं उज्ज्वलवर्णं ध्वजाग्रं यस्य । वर्णा अक्षराणि । सुपरिष्ठिताभिश्च यतिभिर्विरामै रमणीयम् ॥ २६ ॥

**तिण्णि तुरंगा** इति ।

तिण्णि तुरंगा णेउ॑रओ विप्पाइक्का कण्णु ।
दुवहअपच्छद्धेवि वद ल॑क्खणु एउ ण अण्णु ॥ २७ ॥

त्रयस्तुरंगा नूपुरो द्वौ पदाती कर्णः ।
द्विपद(थ)स्य पश्चार्धेपि तदेव स्थापय नान्यत् ॥ २७ ॥

चतुर्मात्रत्रयं गुरुं च स्थापयित्वा चतुर्मात्रद्वयं गुरुद्वयं चेति स्थापय द्विपथस्य पूर्वार्धेपि पश्चार्धे

---

१ जसु विगु AB. २ कुल AB. ३ जण्णउत्त AB. ४ रम्मन्निज्जअं AB. ५ योरधस्तुरङ्ग AB. ६ अण्णुरउ AB. ७ A drops ए from एउ; Com. seems to read तं मा ठवेहि अण्णु for the 4th line, but what it reads for वद is not clear. ८ त्रिस्तुरंगं नूपुरौ द्वौ पदाती कर्णौ AB. ९ पश्चार्धं पित्तं मास्थापयान्यं AB. १० चतुर्मात्र to यित्वा repeated immediately AB. ११ मां AB.

तथैव नान्यत्किंचिदिति । अत्र च सनूपुरचतुर्मात्रत्रयेऽतीते यतिर्विधेयेत्युदाहरणेनोक्तम् ॥ २७ ॥

**वि(व)इआलिअ** इति ।

**वैओलिअअं रसौ लशौ**[1][2][3]
**जइ आभासेसि चारुणेत्तिए ।**[4]
**तो मागहिअत्ति लक्खणे**
**णिम्माअंति मुणेहि सुंदरि ॥ २८ ॥**[5]
**मागहिआ वइआलिअरूवेण ॥**

**वैतालीयं रसौ लशौ[6] यदा(द्या)भाषसे चारुलोचने ।**
**ततो मागधिकामिति लक्षणे निर्मितामिति जानीहि सुन्दरि ॥ २८ ॥**

वैतालीयस्य लक्षणं वक्ष्यति । तस्मिन् रेफसकारौ यथासंख्येन लसौ(शौ) भाषसे उच्चारयसि तदा तां मागधिकामित्यस्मिंल्लक्षणे निर्मितामुपरिष्टामिति मुणेसु जानीहि । एतदुक्तं भवति । वैतालीयमेव [मागधिका] । मागधिकया भाषया समुच्चारणात् ॥ २८ ॥

मात्रालक्षणमाह—**विसमच्छंद** इति ।

**विसमच्छंद पाअ मत्ताहु**
**वे तिण्णि अ सुम्मुहि**
**मणितूँररसगणविणिम्मिअ ।**[7]
**ताहु पाअहु मज्झिमहु**
**णिउणएहिं लक्खणु णिरूविओ ॥ २९ ॥**
**मात्रा चारुनेत्तिआ ।**

**विषमच्छन्दसः प(पा)दा मात्राणां भवन्ति द्वौ त्रयश्च सौम्यमुखि मणिरूपरसगणैर्विनिर्मिताः ।**
**तासां प(पा)दानां मध्यमानां निपुणैर्लक्षणं निरूपितम् ॥ २९ ॥**

मात्राणां[8] पञ्च पादा विषमच्छन्दसोऽसदशाक्षरा भवन्ति । मणिरूपेत्यादिना मात्रा[या] गुरुलघुरचनां अभ्यनुज्ञातवान् । नामभेदमाश्रित्य मध्यमानां लक्षणं निरूपितम् । न तु मध्यमानामेव यस्मात्प्रथमतृतीयपञ्चमांस्त्रयोदशभ्यो[9] मात्राभ्यः षोडश यावद्विधेयाः[10] । एवं द्वितीयचतुर्थावेकादशभ्यः चतुर्दश यावदित्युदाहरणात् शास्त्रान्तरेभ्यो लक्ष्याच्चास्माभिरधिगतम् । यदि नामाचार्यस्यैवमभिमतं न स्यात्तदग्रे 'दुवईगणसम्माणं'[11] (६·५१) इत्यादि स्ववचनविरोधः स्यात् । यस्मात्पादेष्वनियमे मात्राणां न केवलं लघुक्रियाया विघटनं यावत् संख्याया अपीति । अपभ्रष्टेन मात्रा रचनीयेत्ये[12]-तदप्युदाहरणेन दर्शितम् ॥ चारी(रु)नेत्री ॥ २९ ॥

---

१ यदि विधेया AB. २ वइआलिअअं Com. ३ रासो लसो AB. ४ आभासासि B; A drops स and has आभासि. ५ णिम्माअंति असिल पुणोप मुणेहि AB. ६ वैतालीयेति अत्र च सनूपुरचतुर्मात्रत्रयेतीते यदि विधे रसौ लघौ AB. ७ मणिरूव Com. ८ The portion from मात्राणां to निरूपितं is dropped in A; B adds न before मात्राणां. ९ पञ्चमात्रयोद० AB. १० विधय एव AB. ११ दुवईगणगणप्रमाणं AB. १२ ०येत्यप्युदा AB.

यथा मध्यमपादे लक्षणं चिह्नं निरूपितं तथाह—**करहि** इति ।

**करहिअं[1] तेरह मत्ताई (हिं)**
**स चउद्दह मोअणिअ**
**पणरहहिं चारुणेत्तिअ ।**
**जा सोलह अंतिमिअ**
**तहो णाम राहुसेणिआ ॥ ३० ॥**
**मात्रा मोअणिआ ।**

करंभ्याः[2] भवति त्रयोदश मात्रा[भि]ः स चतुर्दश मोदनिकायाः[3] ।
पञ्चदशं[4] चारुनेत्र्याः यस्याः षोडशान्तमिका तस्या नाम राहुसेनिका[5] ॥ ३० ॥

[स] इति मध्यमपादपरामर्शः । स मध्यमपादः करत्या(म्भ्या)दीनां तिसृणां यथासंख्येन त्रयोदशचतुर्दशपञ्चदशमात्रो[6] भवति । यस्याम(स्या अ)न्तस्थितायाः स षोडशमात्रो भवति तस्या राहुसेनेति नाम ॥ मोदनिका ॥ ३० ॥

**एअव(हु)** इति ।

**एअहु मत्तहु अंतिमउ जंविहि[8] दुवहउ ओदि ।**
**तो तहु आ(णा)में रड्ढु फुडु छंदइ कइसंउ ओदि ॥ ३१ ॥**
**दुवहो मोवणिआसंजुत्तउ रड्डा ।**

एतासां मात्राणां अन्तिम(मो) यदा द्विपथको भवति
ततस्तासां नामं[10] [रड्डा स्फुटं] छन्दसि कविजनो ब्रूते ॥ ३१ ॥

एतया(स्याः) करम्भादीनां मध्यादन्यतमस्या अन्ते पादपञ्चकसमाप्तौ यदा द्विपद(थ)को भवति तदा तस्या रड्डेत्येतन्नाम[11] कविजनः कथयति । अयं द्विपथोऽस्या एव मोदनिकाया अन्त उदाहरणत्वेन दर्शितः ॥ ३१ ॥

**सुइसुहाव(इं)** इत्यादि ।

**सुई(इ)सुहाइं विणिएंप्पिणु[12] इह पत्थारसाअरे**
**सुअणु विविहवित्ताई(इं) सुसंचिअगुणमणोहरे ।**
**अडिल होइ आहीरिआइ णअंगि भास(सा)इ**
**सजमएहिं पाए[हिं] समद्धसमेहिं कुण सआ ॥ ३२ ॥**
**अडिलालक्खणं अणिदिट्ठरूएण ।**

---

१ वामर्दीति AB. २ करहि सत्तरह स्रोदि मत्ताई AB. ३ वाराभ्यां AB. ४ मोदनिष्कायाः AB. ५ पंचदरचारुमेभ्या AB. ६ चकुस्सेनिका AB. ७ चतुर्दशौ...मात्रो भवति AB. ८ जइविहि? ९ कइअणु Com. १० नामेतच्छन्दसि AB. ११ न्वेत्येतन्नाम AB. १२ विणिएप्पिणु

संदणअं रहंग संजाणह
चिंधउ हारु पट्टिसं जाणह
जमअविसुद्धएहिं संजाणह
अडिलाण(ल)क्खणंमि संजाणह ॥ ३३ ॥
अडिलालक्खणं ॥

श्रुतिसुखानि विनिरूप्येह प्रस्तारसागरे सुतनु विविधवृत्तानि सुसंचि[त]गुणमनोहरे ।
अडिला भवत्याभीर्या नताङ्गि भाषया सयमकैः पादैः समार्धसमैः कुरु सदा ॥ ३२ ॥

अडिलावृत्ति(त्त)माभीर्या भाषया भवति तच्च प्रस्तारमेव सागरं तस्मिन् श्रुतिसुखदानि मधुराणि वृत्तानि विनिश्चित्य पर्यालोच्य तन्मध्यात्समपादैरर्धसमैर्वा कुरु विधेहि । अन्यच्च किंभूतैः । सह यमकैर्वर्तन्ते ये तैः । एतदुक्तं भवति । मात्रावृत्तस्य यस्य कस्यचिल्ललितस्य आभीर्या भाषया तथा यमकेनोपलक्षितस्य अडिलेति नाम भवति ॥ ३२ ॥....॥ ३३ ॥

वृत्तोदाहरणं भाषासहितमाह—धोरणी इति ।

धोरणि गुमुगुमेइ भ्रमराहुं रसंतिअ
पंकअसंकुलेहिं सलिलेहि सरंतिअ ।
भमरभरोणएहिं कुसुमेहि णिरंतरु
विअसइ ताण मीसु वंसहु सरंतरु ॥ ३४ ॥
अडिला नक्कुडभेएण ।

धोरणी गुमगुमायते भ्रमराणां सरन्ती पङ्कजसंकटैः सलिलैः सरन्तृका ।
भ्रमरभरावनतैः कुसुमैः (कुमुदैः ?) सरोन्तरं विकसति तेषां मिश्रं वंशैः स्वरान्तरम् ॥ ३४ ॥

भ्रमराणां अलीनां संबन्धिनी धोरणी पङ्क्तिर्गुमगुमायते । किंभूता । सरसो जलाशयस्यान्तरं सरोन्तरं सरन्ती गच्छन्ती । किंभूतं सरोन्तरम् । पङ्कजसंकटैः सलिलैरुपलक्षितम् । किंभूता धोरणी । सरन्तृका । रमत इति रन्ता प्रियः । सह रन्त्रा वर्तते या सा सरन्तृका । अथवा । सरसः अन्तः सरोन्तः तत्र भवा सरोन्त्या सरोन्त्या एव सरोन्तिका । अन्यच्च किंभूतं सरोन्तरं वि[क]सति । कुमुदैरुपलक्षितम् । किंभूतैः । भ्रमरभरावनतैः । तत्र च सरोन्तरे तासां भ्रमरपङ्क्तीनां स्वरान्तरो ध्वनिविशेषः विकसति वंशैर्मिश्रित इव मिश्रितो मधुरत्वात् ॥ ३४ ॥

जइ बाह्मणि इति ।

यदि ब्राम्भणु(णि) तिण्हु चउत्थु देहि तुहु कुंजराहु सामंदु ।
भासा तो ओहिअ मारुवाँइं इउ गाह ढोसत्ति ॥ ३५ ॥

---

१ Com. drops this stanza. २ भवत्यातीत्या AB. ३ श्रुतिसुधनानि AB. ४ न वर्तन्ते AB. ५ V. 33 is not commented upon at all. The commentator evidently is not aware of it. ६ सरन्तिअ Com. ७ कुसुमएहि सरंतरु Com. ८ सुनोन्तरं AB. ९ मैनोन्तरं AB. १० चमनोन्तरे AB. ११ मारुदाई AB.

यदि ब्राह्मणि त्रयाणां चतुर्थं ददासि त्वं कुञ्जराणां दा(सा)मन्तम् ।
भाषया ततो ब्रूहि मारव्येमां गाथां ढोषामिति ॥ ३५ ॥

हे ब्राह्मणि त्रयाणां कुञ्जराणामनन्तरं यदि सामन्तं राजानं ददासि ततस्तां गाथां मारव्या[1] भाषयोपलक्षितां[2] ढोषामिति भण ॥ ३५ ॥

अस्या[3] एव विशेषान्तरार्थं द्वितीयां गाथामाह—**अहं तिहु** इति ।

**अह तिहु चउत्थ ण श्रोदि कहवि सो कुंजराहु सामंदु[4] ।**
**तो देहि चउत्थओ माहा(ह)णोवि ढोसाहु णउ[6] दोसु ॥ ३६ ॥**
**अवब्भंसगाहाजुअलएण ढोसोहि णाम ।**

अत्र(थ) त्रयाणां चतुर्थो न भवति कथमप्यसौ कुञ्जराणां सामन्तः ।
ततो देहि चतुर्थं ब्राह्मणमपि ढोषाया नैव दोषः ॥ ३६ ॥

त्रयाणां कुञ्जराणामनन्तरं कथमपि कदाचिदपि यदि न सामन्तो भवति ततो ब्राह्मणमपि देहि । अस्मिन्दत्ते ढोषाणां[7] नैव दोषो भवति । कुञ्जरश्चतुर्मात्रः । एतदुक्तं भवति । यदि मारव्या[8] भाषया गाथा उच्चार्यते चतुर्थे चास्या यदि मध्यगुरुः सर्वलघुर्वा भवति नियमेनैव ततो ढोषाख्यां लभते । मारवी च भाषा उदाहरण एव दर्शिता । मरौ भवा मारवी । मारुवेत्यन्यः पठति ॥ ३६ ॥

**वित्थारिअ** इति ।

**वित्थारिअआणुमएण कुण**
**दुवईछंदोणुमएव्व मुणं[9] ।**
**इअ रासअ सुअणु मणोहरए**
**वेआरिअसत्तंथक्खरए[10] ॥ ३७ ॥**
**रासअलक्खणे अणिदिट्ठवत्थुअं मत्ताम(ग)णसमम् ।**

विस्तारितकानुमतेन कुरु[11] द्विपदीछन्दोनुमतेन वा पुनः ।
इति[12] रासकं सुतनु[12] मनोहरं विदारीसमाप्ताक्षरम् ॥ ३७ ॥

विस्तारितकलक्षणमुक्तम् । तदनुमतेन वा रासकं कुर(रु) । अथवा द्विपदी वस्तुकेसीत्यन्तरै(?)-र्विधेहि । किंभूतं रासकम् । विचार्यामुक्तलक्षणायां समस्तान्यक्षराणि अभिधेयवर्णानि यस्य । एतदुक्तं भवति । येन केनचिद् द्विपदीरूपकेन द्विपद्यनुकारिणा वा गीतिकामिश्रैर्विचार्यन्तैर्वा रूपकै[13] रासको भवति ॥ ३७ ॥

अपरमपि प्रसिद्धं रासकमाह—**अडिलाहिं** इति ।

---

१ माराध्यया A; मागध्या B. २ उपलक्षितौ भोपामिति AB. ३ आद्या AB. ४ अत तिण्णेति AB. ५ सामंतादु AB. ६ णउ Com. A seems to read ह्लुउ; B reads क्षओ. ७ भोपणो A; भोपाणां B. ८ माराध्यया A; मागध्या B. ९ पुण Com. १० Com. seems to read संमत्तक्खरए. ११ वा कुरु AB. १२ रसं गुतनु० AB. १३ रूपनासको A; रूपनरसको B.

अडिलाहिं दुवहएहिं व मत्तारड्डाहिं तह अ ढोसाहिं ।
बहुएहिं जो रइज्जई सो भण्णइ रासओ णाम ॥ ३८ ॥

गाहा रासअलक्खणत्थे ।

अडिलाभिर्द्विपथकैर्वा मात्रारड्डाभिरथवा ढोषाभिः ।
बहुभिर्यो रच्यते स भण्यते रासको नाम[1] ॥ ३८ ॥

अडिलादिभिर्वृत्तैस्त्रिप्रभृतिभिर्यो निबध्यते एकस्मिन्नेवार्थे स रासको भण्यते ॥ ३८ ॥

**चलण** इति ।

चलणसमे(मो)हसिअरत्तपंकअ-पसत्थथोरोरु-लडहतणुमज्झ-तुंगपीवरपओहरिल्लिए
करअललाअण्णणिज्जिआसोअमुद्धपल्लव विउद्धकंदोट्टणअण, कोमुईमिअंकवअणिए ।
ठवेसु तइअअणिउत्तथणविप्पसेसमाअंगतुरअपाइक्कजोहरहए समाणसंखए
विसमट्ठाणाविरुद्धणरणाहविअडपअमग्गघडिअसुइसुहअवण्णदीहरसमासकु(जु)त्तए ॥
२९ ॥ ससिअं ॥

चरणे[2]समुपहसितप[ङ्क]ज–प्रशस्तपीनोरु–लटभतनु[3]मध्य–तुङ्गपीवरपयोधरवति
करतललावण्यव(नि)र्जिताशोकमुग्धपल्लवे, विबुद्धकन्दोट्टनयन, कौमुदीमृगाङ्कवदने ।
स्थापय तृतीयकनियुक्तस्तनविप्रशेषमातंगे[4]तुरंगपदातियो[5]धरथान् समानसंख्यान्
विषमस्थानाविरुद्धन[6]रनाथविकटपदमार्गघटितश्रुतिसुभगवर्णदीर्घतरसमासयुक्तं(क्तान्) ॥ ३९ ॥

वस्तु । एतस्यैवार्थावलम्बिनी गीतिका **विरँम** इति ।

विरमणिरूविअवार्णए अवलंबिअगीइअअत्थसी[से]सएसुं ।
चउसु वि सण्ण[अ]वाहिए इह मालासीसअस्स पाअएसुं ॥ ४० ॥

मालासीसअलक्खणत्थे गीइआ ॥

विरामनिरूपितबाणान्[7] अवलम्बितगीतिकार्थशेषेषु[8] ।
चतुर्ष्वपि[9] संनंतबाहो इह मालाशीर्षकस्य पादेषु ॥ ४० ॥

संनतौ[10] बाहू यस्यास्तस्या आमन्त्रणम् । एवंविधान् गणान् चतुर्ष्वपि पादेषु मालाशीर्षकस्य स्थापय । वस्तुपरिपूरणार्थमामन्त्रणपदानि पादद्वय(ये) । विशेषणविशेष्यभावेन समासाः । चरणाभ्यां समुपहसितमवधीरितं रक्तपङ्कजं यया । तथा प्रशस्तौ थोरौ पीनावूरू यस्याः । लटभं रमणीयं तनु च मध्यं यस्याः । तथा तुङ्गावुन्नतौ पीवरौ[11] घनौ स्तनौ यस्याः सा एवंभूता । इत्येकपदं

१ नामको AB. २ चरणे समुपहित AB. ३ लबाहतमध्य AB. ४ शेष repeated after तुरंग AB. ५ पदातिपयोधररथान् AB. ६ विरुद्धानननाथ AB. ७ विनामेति AB. ८ वारणए AB. ९ चतुर्धापि सतुबाहो AB. १० सततौ AB ११ पीनो AB.

पादश्च । तथा करतललावण्यव(नि)र्जितान्यशोकवृक्षस्य मुग्धान्यभिजातानि पल्लवानि किसलयानि यया । तथा विबुद्धस्य कन्दोट्टस्य विकसितोत्पलस्य सदृशे नयने यस्याः । तथा कौमुद्यां कार्तिकपौर्णि(र्ण)मास्यां योऽसौ मृगाङ्कः चन्द्रमाः [तेन] सदृशं वदनं यस्याः सा तथाभूता इति द्वितीयः पादः । हे एवंभूतगुणयुक्ते मातंगादीन् स्थापय । किंभूतान् । तृतीयो नियुक्तः स्तनो विप्रो वा येषाम् । शेषांश्च मातंग[तुरग]पदातियोधरथान् सामान्येन चतुर्मात्रगणान् समानसंख्यान् तुल्यगणनान् स्थापय इच्छया षोढा दशधा द्वादशधा लक्ष्यानुसारेणेति । तथा विषमस्थाने वाविरुद्धो नरनाथो येषां तथा विकटैर्विस्तीर्णैः पादमार्गैः पादगतिभिर्दीर्घतराणि रचितानि यानि श्रुतिसुखानि मधुराणि वर्णानि वाचकानि तैर्ये दीर्घतराः समासाः तद्युक्तम् । अन्यच्च । विरामेन्ते निरूपितो वाणो येषां तानेवंभूतान्गणान् स्थापय चतुर्ष्वपि पादेषु । किंभूतेषु । अवलम्बितोऽधिकृतो गीतिकार्थामर्थस्याभिधेयस्य शेषो येषाम् ॥ ४० ॥

**कइणो चिंततस्स** इति ।

**कइणो चिंततअस्स अहिअक्खरत्थसेसअं**
**णीलुप्पलविअसिअच्छि गीइआ(अ)इ जइ समत्तअं ।**
**तो जाणसु सणअंगि दूरमहुरक्खररिल्लि[अं]**
**सत्थत्थविअक्खणाण पुरिसाण सुइसुहावअं(हं) ॥ ४१ ॥**

**कवेश्चिन्तयतोऽधिकाक्षरार्थशेषं नीलोत्पलविकसिताक्षि यदि गीतिकासमाप्तम् ।**
**ततो जानीहि संनताङ्गि दूरमधुराक्षरं शास्त्रार्थविचक्षणानां पुरुषाणां श्रुतिसुखावहम् ॥ ४१ ॥**

इत्यधिकाक्षरा । अनन्तरमस्यैवार्थे गीतिकामाह—**माणिणि** इति ।

**माणिणि दाविज्जंतुअं तुह दंसणसुहरसाविअण्हएण ।**
**विरहंकएण मुद्धिए अहि[अ]क्खरसीसअंति बीअअंमि(पि) ॥ ४२ ॥**

अहिअक्खरसीसअं [अधिकाक्षराशीर्षकं] ।

**मानिनि प्रदर्श्यमानं तव दर्शनसुखरसावितृष्णेन ।**
**विरहाङ्केन मुग्धेऽधिकाक्षरशीर्षकमिति द्वितीयम् ॥ ४२ ॥**

हे मानिनि द्वितीयमधिकाक्षराशीर्षकं तत्र विरहाङ्केन दर्श्यमानं अधिकाक्षरं अर्थशेषो यस्य तथा गीतिकायां समाप्तम् । शेषमुदाहरणपरिपूरणम् । शास्त्रार्थविचक्षणा ये पुरुषाः [तेषां] श्रुतिसुखावहम् । विरहाङ्क इति आचार्यस्य नाम । किंभूतेन विरहाङ्केन तत्र दर्शनार्थसुखं तदेव रस इव रसः तस्मिन्नवितृष्णेन । अन्येषां मते अधिकाक्षरैव [स]गीतिका अधिकाक्षराशीर्षकम् ॥ ४२ ॥

१ पयोधररथां B; पयोधरथा A. २ स्रुति० A; स्तुति० B. ३ तैर्यैते AB. ४ तेनेवं AB. ५ विधृतो AB. ६ गीतिकासामर्थ्यस्याभि० AB. ७ सीसअ AB. ८ रिलं A; रिल B. ९ विकसिताक्षिनूपुरमधु० AB. १० शीर्षकोन्तय AB. ११ शास्त्रान्तरविचक्ष[illegible] AB. १२ [illegible] AB. १३ [illegible] AB. १४ गीतिकाक्षराशीर्षकं AB.

निर्वापिताशीर्षकार्थमाह—**अहिअक्खर** इति ।

**अहिअक्खरसीसअस्स अवि(व)लंबिअत्थप[1]अडिआ**
**विणिउज्जइ सण्णअंगि मज्झे जइ णिव्वा(व्वा)इया ।**
**तो जाणसु तिअलअंति बहुछंदओत्तभणिअअं**
**बी(वि)य[2]अं व पुणो मुणो(णे)सु छउओअरि सीसअं तं ॥ ४२ ॥**

तिअलअमालासीसअं [त्रिकलकं; मालाशीर्षकं] ।

अधिकाक्षराशीर्षकस्या[व]लम्बितार्थचेतिता विनियु[3]ज्यते संनतां[3]ङ्गि मध्ये यदि [नि]र्वापिता ।
ततो जानीहि त्रिकलकमिव(ति) बहुछन्दोविद्भणितं द्वितीयं शीर्षकमिति नाम जानीहि मुग्धे ॥ ४२ ॥

इत्यधिकाक्षरा । अस्यैवार्थे निर्[4]वापितामाह—

**अहि[अ]क्खरसीसअस्स जं मए**
**तुह कहिअं लक्खणं पिअल्लिए ।**
**भणिअं [5]तं च इमम्मि तिअलअए[5]**
**ससहर[6]वयणे कवीहिं छंदए ॥ ४४ ॥**

अणिदिट्ठसमरूवि(व)अं [अनिर्दिष्टसमरूपकं] ।

अधिकाक्षरशीर्षकस्य यन्मया तव कथितं लक्षणं प्रियतमे ।
भणितं तदेवास्मिंस्त्रिकलके शशि(श)धरवच(द)ने कविभिश्छन्दसि ॥ ४४ ॥

हे चन्द्रमुखि त[7]त् त्रिकलकस्य लक्षणमिति जानीहि[7] । यद्यधिकाक्षराशीर्षकस्य य एवार्थस्तस्मिन्नेव निर्वापिता विरचनीयेत्यर्थः । बहुच्छन्दोविद्भिर्भणितमिति त्रिकलकविशेषणम् । किंच । द्वितीयमप्यस्य नाम मुणेसु जानीहि शीर्षकमिति । अस्यैव त्रिकलकमिति निर्वापिताशीर्षकमिति च नामद्वयमित्यर्थः । निर्वापिता-उदाहरणपतितो योऽर्थो व्याख्यायते । अधिकाक्षराशीर्षकस्येति । एतदुक्तं भवति । यदेवाधिकाक्षराशीर्षकस्य तव मया भणितं [लक्षणं] तदेवास्मिन् त्रिकलके कविभिर्निरूपितमिति कइणो चिंतंतस्सेत्यादिना ॥ ४४ ॥

अस्यानन्तरमुदाहरणपूरणार्थं गीतिकामाह—**मालासीसअ** इति ।

**[मा[9]लासीसअणामए इच्छासमसंखअंसणिअमएण ।**
**जं लक्खणं पिअल्लिए तं चिअ कहिअं इमम्मि तिअलएवि ॥ ४५ ॥]**

मालाशीर्षकनाम्नीच्छासमसंख्यांशनियमेन ।
यल्लक्षणं प्रियतमे तदेव कथितमस्मिन् त्रिकलके ॥ ४५ ॥

---

१ पायडिआअडिआ AB; चेइआ Com. २ Com. seems to read बीअं वि सीसअंति णामं मुणेसु मुद्धिए. ३ विविधसन्नतापि AB. ४ निर्वाहितमाह AB. ५ तं चिअ इमम्मि तिअलए Com. This is metrically correct. ६ ससिवयणे AB. (against metre). ७ ततस्त्रिकलसिधरवचनमिति जानीहि AB. ८ निर्वारणा AB. ९ This stanza is reconstructed from the commentary. It is not found in the text.

इच्छा(च्छ)या समसंख्यांशाति(दि?)नियमेनावश्यतया यदेव लक्षणं मालाशीर्षकनाम्युक्तं तदेवास्मिंस्त्रिकलके भणितम्। एतच्छिष्याणां विस्पष्टार्थं पुनर्लक्षणमुक्तम्। एवं चतुर्भी रूपकैस्त्रिकलको भणितः॥ ४५॥

**सललिअ** इति।

**सललिअगमणे पिए पुण्णअंदाणणे दीहराअंग-**
**पल्हत्थणीलुप्पले[1] णाअसत्थत्थसंभाविए**
**कणअकलससण्णिहोत्तुंगपीणुत्थणोक्कंपवोसट्ट-**
**लाअण्णसोहास(सु)सोहाविआणा(णे)असिद्धंगणे।**
**रसरवफु(फ)रिसेसु दिण्णेसु दे दुण्णि गंधे पुणो पाअडं**
**पक्खिणाहं समाणाइ संखाइ[2] विंबोट्ठिए**
**चउसुवि इह डंडए चारु पाएसु इच्छाइ दूरुज्ज-**
**णेववलन्तेसु (?) थोरोरुसोहासुसोहाविए॥ ४६॥**

दंडओ [दण्डकः]।

सललितगमने प्रिये पूर्णचन्द्रानने दीर्घतरापाङ्गपर्यस्तनेत्रोत्पले ज्ञातशास्त्रार्थसद्भावे
कनककलशसंनिभोत्तुङ्गपीनस्तनोत्कम्पविकसल्लावण्यशोभासुशोभिता[नेकसिद्धाङ्गने।
रसरवस्पर्शेषु दत्तेषु देहि द्वे गन्धे पुनः प्रकटं पक्षिनाथं समानया संख्यया बिम्बोष्ठि
चतुर्ष्वपि इह पादेषु दण्डके चारु पादेषु इच्छया दूरं स्थविरोरुशोभासुशोभिते॥ ४६॥]

हे एवंभूते प्रिये दण्डकस्य पादेषु[3] चतुर्ष्वपि रसरवस्पर्शेषु दत्तेषु[4] सत्सु द्वे गन्धे देहि लघुषट्कमित्यर्थः[5]। पुनः पश्चात्पक्षिनाथं मध्यलघुं प्रकटं स्पष्टं समानया[6] संख्यया देहि। अत्रेच्छया समानत्वं पादापेक्षया। तेनैतदुक्तं भवति। यावद्भिर्गणैः पादः प्रथमो भवति तावद्भिरेवास्य पादत्रयमिति। यस्मादन्यैराचार्यैः सप्तनैवैकादशभिरपि[7] दण्डकः कथित एव। दीर्घतरयोरपाङ्गयोः पर्यस्ते प्रसृते नीलोत्पले यस्याः। तथा ज्ञातः शास्त्रार्थानां सद्भावः परमार्थो यया सा। तथा कनककलशसंनिभौ हेमकुम्भसदृशौ यावुत्तुङ्गौ उन्नतौ पीनौ च स्तनौ तदुत्कम्पेन[8] विकसितं यत्तव लावण्यं तच्छोभया सुष्ठु शोभिताः अनेकाः सिद्धाङ्गनाः देवललना यया। निध्वनन्तं निष्पाद्यमानम्। वोसट्टं[9] विकसितम्। थोरं परिवर्तुलम्। एनान्यामन्त्रणानि॥ ४६॥

**करमेत्त** इति।

**करम(मे)त्तआ।**

**कण्णअमत्तअव्व खंडुग्गआइ विसमा**
**हुअंति सव्वे दीहधवलच्छि विरमंट्ठाणुज्जलंदिण्णतिमत्तआ[10]।**

---

१ णीलुप्पलो णामअत्थत्थ० AB. २ सवाणई संखाई AB. ३ पादेष्वपि AB. ४ वनेषु B; A drops the word.
५ लघुपंकमित्यर्थः AB. ६ [illegible] AB. ७ [illegible] AB. ८ [illegible] AB. ९ [illegible] AB. १० विसम० AB.

अणरिंदआ ।

विसमट्ठाणे(ण)एसु पाआ समावि कअबीअतईअ–
सरसेससणिअमसजमअसमसंखतुरअगआ सणरिंदआ ॥ ४७ ॥

खंडुग्गआ [खण्डोद्गता] ।

[करमात्रौ] । कर्णमात्रौ च खण्डोद्गतायाः[1] विषमौ भवतः सर्वे[2] दी[2]र्घधवलाक्षि विरमस्थानोज्ज्वलद्दत्तत्रिमात्राः । अनरेन्द्रौ । विषमस्था[5]नेषु पादौ समावपि[3] कृतद्वितीयतृतीयशरशे[4]षसनियमसयमकसमसंख्[6]यतुरगगजौ सनरेन्द्रौ ॥

खण्डोद्गतायाः विषमपादौ कर्णमात्रौ करमात्रौ वा भवतः । गुरुद्वयेनान्तगुरुणा वेत्यर्थः । हे दीर्घधवलाक्षि सर्वे चास्याः पादाः समा विषमाश्च वि[5]रामस्थाने दत्तोज्ज्वलत्रिमात्राः सर्वपादानामन्ते त्रिमात्रोन्तगुरुः कर्तव्य इति । समौ च पादावेवंभूतौ विधेयौ—कृतौ द्वितीयतृतीयौ [शरौ] पञ्चमात्रौ नियमेन सयमकौ तथा समसंख्यास्तुर[ग]गजाः ययोस्तौ कृतद्वितीयतृतीयशर[6]सनियमसयमकसम-संख्यतुरगगजौ । अन्यच्च । सनरेन्द्रौ सामान्यसंज्ञायामितरत्र मध्यगुरुर्गृ(र्ग्र)हीतव्य इत्यर्थः । किंतु अनरेन्द्रावेतौ विषमस्थानेषु विधेयौ ॥ ४७ ॥

वइआलिअ इति ।

वइआलिअअं दुमत्तआ
तिण्णि विहंग[7]वई धअग्गअं ।
समपाअमुहेसु वड्ढिआ
होइ रसेण व णेउरेण वा ॥ ४८ ॥ [वैतालीयं] ।

वैतालीयं द्विमात्रास्त्रयो विहंगमपतिः ध्वजाग्रम् ।
समपादमु[8]खेषु वर्ति(र्धि)तं भवति रसेन वा नूपुरेण वा ॥ ४८ ॥

प्रथमं सामान्येन द्विमात्रास्त्रयो गणाः विहंगमपतिरनन्तरमन्ते च ध्वजाग्रं यस्य तदेवंभूतं वैतालीयम् । किंच । समपादयोर्मुखे[8] रसेन वा नूपुरेण वा वर्धितमिदं मात्राद्वयेनेत्यर्थः । द्वे मात्रे पृथक् पृथक् लघुरूपेण चात्र ॥ ४८ ॥

वइआलिअ[अ]स्स इति ।

वइआलिअअस्स पाअअम्मि
एक्को वड्ढइ चारुभूसणेणं
तं साहइ दु(तु)ज्झ दीहरच्छि
उअच्छंदसए लक्खणं विरामे ॥ ४९ ॥ [औपच्छन्दसकं] ।

वैताली[य]स्य पादे एकं वर्धते चार्य(रु)भूषणस्य ।
तत्साध्यते दीर्घतरा[10]क्षि औपच्छन्दसके लक्षणं विरामे ॥ ४९ ॥

---

१ वर्णोद्गताया AB. २ सर्वदीर्घवधाक्षि AB. ३ विषमस्थानौ पादौ ससावंवि कृत० AB. ४ शेषनियमंशसानियमंसंख्य AB. ५ विसमस्थाने AB. ६ शरनियममयसमसंख्य० AB. ७ विहंगमाइं AB. ८ युगेषु AB. ९ दु:खे AB. १० दार्घतरलाक्षि AB.

वैतालीयस्य यः पादस्तस्मिन् विरामे यद्येकं भूषणं वर्धते तदास्यौपच्छन्दसकमिति नाम भवति तत्र साध्यते कथ्यते ॥ ४९ ॥

**आवांअलि** इति ।

**आवाअलिअम्मि दुमत्ता**
**तिण्णि पुणो चलणा मणिहारा ।**
**समपाअमुहेसु निहित्ता**
**तस्स मणिव्व रसोव्व इसीहिं ॥ ५० ॥** [आपातलिका] ।

**आपातलिकायां द्विमात्रास्त्रयः पुनश्चरणे(णो) मणिहारौ ।**
**समपादमुखेषु विनियुँक्तः [तस्य] मणिर्वा रसो वर्षिभिः ॥ ५० ॥**

आपातलिकानाम्नि वृत्ते द्विमात्रगणत्रयँस्यान्ते चरणँमणिहारा विरचनीयाः । आदिगुरुर्गुरुद्वयं चेत्यर्थः । ऋषिभिः सैतवादिभिर्मणिर्वा लघुद्वयं वा समपादमुखे युक्तम् ॥ ५० ॥

एतेषां विशेषलक्षणार्थं गाथामाह—**व[इ]आलिअ** इति ।

**वइआलिअउअच्छंदसआवा[अ]लिआण माँ कुण समेसुं ।**
**पाएसु तिण्णि घडणट्ठिए रसे दीहधवलच्छि ॥ ५१ ॥**

**मा(गा)हा वैआलिअउवच्छंदसआवायलिआण समा(म)पाअविसेसलक्खणत्थे ।**

**वैतालीयौपच्छन्दसकापातलिकानां मा कार्षीः समेषु ।**
**पादेषु त्री[न्] घटनास्थितान् रसान् दीर्घधवलाक्षि ॥ ५१ ॥**

एतेषां वृत्तानां द्वितीयचतुर्थपादयोः संघातस्थितास्त्रयो रसा न विधेयाः । गुरुव्यवहिताः कार्याः षट् लघव इत्यर्थः ॥ ५१ ॥

**पँढमणिउत्त** इति ।

**पढमणिउत्तहत्थिवीआसितइज्जरहंगतुरअएहिं**
**समसंखाइ सेसपाइक्कजोहसंदणगअंदएहिं ।**
**कीरइ उग्गआइ सव्वाअरेण विरमट्ठिअजमएहिं**
**समणिलआविरुद्धवसुहाहिवेहि द(च)हुहिंपि पाअएहिं ॥ ५२ ॥**

उग्गआ [उद्गता] ।

**प्रथमानु(नि)युक्तहस्तिद्विती[यासितृती]यरथाङ्गतुरगैः समसंख्यया शेषपदातियोधस्यन्दनगजेन्द्रैः ।**
**क्रियते उद्गताया: सर्वादरेण विरामस्थिति(त)यमकैः समंनिलयाविरुद्धंवसुधाधिपैश्चतुर्भिरपि पादैः ॥ ५२ ॥**

उद्गता एवंविधैः पादैः क्रियते । प्रथमे नियुक्तं हस्ती द्वितीयश्चासिरतृतीयश्च रथाङ्गं तुरंगश्च समसंख्यया शेषाश्च पदातिप्रभृतयः सामान्येन चतुर्मात्रा येषां समनिलये समस्थाने अविरुद्धो

१ आवालिअ AB. २ विणियुक्तर्म्मणिर्वा AB. ३ द्वयस्यान्ते AB. ४ रचण AB. ५ मा कुण सैरसमेसुं AB. ६ स्थितं रसांदीधवलाक्षि AB. ७ पढममणिउत्तेति AB. ८ उद्गता च AB. ९ समलिकयाविसुद्ध AB. १० रथाङ्गस्तुरङ्गे वा AB. ११ चतुर्था AB. १२ समतितये AB. १३ समस्थानविरुद्धा A, ०विरुद्धा B.

वसुधाधिप[श्च] येषां तैरिति ॥ ५२ ॥

दे कोट्टुम्बअस्स इति ।

दे कुट्टुंभअस्स पढमं चलणं अहवा अ कण्णअं
भामिणि बीअअं च विहआहिवइं तइअं रहंगअं ।
पाणिजुअं पुणोवि सपओहरअं महुरक्खरिल्लिए
कोमलवंधअम्मि विरमुज्जलए रअणं च पाअए ॥५३॥ [कुट्टुम्भकं] ।

देहि कोट्टुम्बकस्य प्रथमं चरणमथवा कर्णं भामिनि द्वितीयं च विहगाधिपतिं तृतीयं रथाङ्गम् ।
पाणियुगं पुनरपि सपयोधरं मधुराक्षरे कोमलबन्धे रत्नोज्ज्वले विरामे पादे ॥ ५३ ॥

कोट्टुम्बकस्य पादे प्रथममादिगुरुं द्विगुणं(रुं) वा देहि तृ(द्वि)तीयं च विहगाधिपं गरुडं तृतीयं च रथाङ्गं चक्रं च । अनन्तरं पाणियुगम् । किंभूतम् । सहपयोधरेण मध्यगुरुणा वर्तमानम् । किंभूते पादे । रत्नेनोज्ज्वले । विराम इति विषयनिर्देशः ॥ ५३ ॥

रसणेउरभावमणीण पिए
पुरओ करपल्लवआण जुअं ।
कसणोप्पलसण्णिहलोअणिए
कुण छित्तअपाअ मणोहरए ॥ ५४ ॥ [छित्तकं] ।

रस इति ।

रसनूपुरभावमणीनां प्रिय(ये) पुरतः करपल्लवयोः युगम् ।
कृष्णोत्पलसंनिभलोचने कुरु छित्तके सुमनोहरे ॥ ५४ ॥

रसस्य द्विलघोर्नूपुरस्य गुरोश्च भावस्य लघुद्वयस्यैव च तथा मणेः पुरतोऽग्रे करपल्लवयोर्युगं च्छित्तकनाम्नि वृत्ते विधेहि ॥ ५४ ॥

चामर इति ।

चामरभावकु(जु)अम्मि विइण्णे
देसु सणेउररूअजुअं च ।
हारलअं कडअं च विरामे
दूरसमुज्जलभित्ति(त्त)अपाए ॥ ५५ ॥ [भित्तकं] ।

चामरभावयुगे वितीर्णे देहि सनूपुररूपयुगं च ।
हारलतां कटकं च विरामे दूरसमुज्ज्वलभित्तकपादे ॥ ५५ ॥

---

१ रअणुज्जलए विरमम्मि Com. २ च चरण० AB. ३ पाणियुगं repeated immediately in A. ४ कमलोप्पल AB. ५ छित्तअए सुमणो० Com. ६ मनीनो A; मानिनो B. ७ श्चितके AB. ८ रम्य AB. ९ वृत्तं AB. A adds कुरु. १० सनूपुरत्रययुगं AB. ११ छित्तक AB.

चामरश्च भावश्च चामरभावौ तयोर्युगे द्वितये[1] वितीर्णे[1] दत्ते पश्चात् सनूपुरं[2] रूपयुगं च देहि[2]। विरामे हारलतां कटकं च । दूरसमुज्ज्वलेऽत्यर्थं मनोहरे । भित्तके चरणत्रयं कर्णश्चे[3]त्यर्थः ॥ ५५ ॥

विरा(र)म इति ।

विरमट्ठाणएसु पसअच्छि कण्णएहिं विइण्णएहिं
समणिलआविरुद्धणिअम्मिअमणोहरेहिं[4] पओहरेहिं[4] ।
तइअट्ठाणबीअणिलए सरासणेहिं [कआसणेहिं]
अइ सामुग्गआइ सेसे पिए गएहिं विलग्गएहिं ॥ ५६ ॥

सामुग्गआ [सामुद्गका] ।

विरामस्थाने प्रसृताक्षि[5] कर्णैर्वितीर्णैः समनिलयाविरुद्धनियमितपयोधरैर्मनोहरैः ।
तृतीय[6]स्थाने द्वितीय[6]निलये शरासनैः कृतासनैः [अयि] सामुद्गकायाः शेषे प्रिये[7] गजैर्विलग्नैः ॥ ५६ ॥

सामुद्गकायाः पादाः इति भवन्तीति । विरामस्थाने कर्णै[8]रुपलक्षिताः । तथा समनिलयैरविरुद्धा नियमिता ये ते पयोधरास्तैश्च मनोहरैरुपलक्षिताः । अन्यच्च । तृतीयस्थानकं द्वितीयनिलयं च, तस्मिन् शरासनाभ्यां धनुर्भ्यां उपलक्षिता ये च । शेषे च परिशिष्टैर्गजैर्विलग्नैः श्लिष्टैः उपलक्षिता ये च ये । विरामस्थाने(नं) द्वितीयतृतीये च मुक्त्वान्येषां चतुर्मात्रा विधेया इत्यर्थः ॥ ५६ ॥

पक्खिणाह इति ।

पक्खिणाहअ[ह]त्थाणं
संः(अं)तअम्मि दु[ए] हारा ।
दे इमस्स सआ पाए
हंसगामिणि गाहस्स ॥ ५७ ॥ [गाथः] ।

पक्षिनाथहस्तयोरन्ते द्वौ हारौ ।
देह्ये[9]तस्य सदा पादे हंसगामिनि गाथस्य ॥ ५७ ॥

एतस्य गाथस्य पादे पक्षिनाथस्य मध्यलघोर्हस्तस्य चान्तगुरोरन्ते गुरुद्वयं देहि ॥ ५७ ॥

णा[10]राअस्स इति ।

णाराअस्स विरुज्झइ णअंगि णिअअम्मि लक्खणे णामं ।
जेण अ(स)आ तेण मए णिअरिसणं केवलं भणिअं ॥ ५८ ॥

गाहा णाराअणामत्थे ।

नाराचस्य विरुध्यते नताङ्गि निजके लक्षणे[11] नाम
येन सदा तेन मया निदर्शनं केवलं भणितम् ॥ ५८ ॥

---

१ द्वितीये विस्तीर्णे AB. २ सनूपुरे रूपयुगे लघुर्देहि AB. ३ कर्णः dropped in A. ४ पओहरेहिं मणोहरेहिं Com. ५ प्रसत्यद्विद्वि AB. ६ द्वितीयस्थाने तृतीयनिलये AB. ७ प्रियैः AB. ८ कभैरुप० A. कभिरुप० B. ९ तेह्यन्तस्य AB. १० माअस्सेति AB. ११ लक्षणा AB.

यस्मिन् लक्षणवाक्ये नाराचमुक्तं[1] तस्मिन् तस्य नाम विरुध्यते। उदाहरणव्याघातात्। येन कारणेन तेन तस्मान्नाम्नो निदर्शनं उदाहरणं केवलं पृथग्भणितम् ॥ ५८ ॥

आह च—**ससद्द** इति।

**ससद्दणेउरं धअं**
**सरूवकुंडलं रवं।**
**ठवेसु तस्स पाअए**
**विरामए सहारअं** ॥ ५९ ॥ नाराअं [नाराचकं]।

**सशब्दनूपुरं ध्वजं सरूपकुण्डलं रवम्[2]।**
**स्थापय तस्य प(पा)दे विरामे सहारम् ॥ ५९ ॥**

तस्य नाराचस्य प्रथमं सशब्दं नूपुरं स्थापय पश्चात् ध्वजमनन्तरं सरूपं च कुण्डलं रथं(वं) सहारं च ततः। ध्वजपटाश्चत्वार इत्यर्थः ॥ ५९ ॥

**गअरह** इति।

**गअरहतुरंगसंदणणिउत्तजोहेहिं**
**रणे[3]अविरुद्धणराहिवविलग्गसोहेहिं।**
**छट्ठणिरूविअमरगअविरामजमएहिं**
**ललिअं ठवेसु सुंदरिए समपाअएहिं[4]** ॥ ६० ॥ [ललिता]।

**गजरथतुरंगस्यन्दननियुक्तो(क्त)योधैः रणे नविरुद्धनराधिपविलग्नशोभैः।**
**षष्ठनिरूपितमरकतविरामयमकैर्ललितां स्थापय सुन्दरिके समपादैः ॥ ६० ॥**

गजादिभिः सह नियुक्तो योधो येषां ते। तथा पञ्चभिश्चतुर्मात्रैः पादः कार्यः। रणे समेऽविरुद्धे च नराधिपे विलग्ना[5] शोभा येषां षष्ठे च निरूपितं मरकतं [तैः] विरामयमकैः ललितां स्थापय ॥ ६० ॥

**रस** इति।

**रसणेउरभावमणीण जुअस्स जुअं**
**णिअमेण णिउंजसु रूअजुअं समणिं।**
**भवरावलिआइ सुदूरमणोहरए**
**ललिअक्खरपंतिपसाहणसोहिअए** ॥ ६१ ॥ [भ्रमरावलिः]।

**रसनूपुरभावमणीनां युगस्य युगे(गं) नियमेन नियुङ्क्ष्व रूपयुगं समणिम्[6]।**
**भ्रमरावल्यां सुदूरमनोहरं ललिताक्षरपङ्क्ति[7]प्रसाधनशोभितम् ॥ ६१ ॥**

---

१ नासावयुक्तं AB. २ ध्वजारथं AB. ३ थणणविरुद्ध AB. ४ ससमपाअएहिं AB. ५ रविलग्नानां च येषां AB.
६ सुमति B; समनि A. ७ पङ्क्तिप्रसा० AB.

रसश्च [नूपुरं च] भावश्च मणिश्च ते रसनूपुरभावमणयः तेषां यद्युगं द्विरावृत्तिः अस्मिन् स्थिते सति नियमेन रूपयुगं मणिसहितं नियुङ्क्ष्व पञ्च करा इत्यर्थः ॥ ६१ ॥

**तुरअ** इति ।

**तुरअरहंगवाणए चलणं च सआ**
**ताण पुरिल्लिअं कुण णेउरं छउए ।**
**सहिअअमणसुहावए महुरक्खरए**
**कुमुअअपाअए मुद्धिए सोहणए ॥ ६२ ॥ [कुमुदकं] ।**

तुरगरथाङ्गबाणान् चरणं च सदा तेषां पौरस्त्यं कुरु नूपुरं छाते ।
सहृदय[म]नःसुखावहं(हे) मधुराक्षर(रे) कुमुदकपादे मुग्धे शोभने ॥ ६२ ॥

तुरंगमश्च रथाङ्गे(ङ्गं) च बाणश्च तान्प्रथमं कुरु । पश्चाच्चरणमादिगुरुं कुरु । तेषां पौरस्त्यं पुरोवर्ति । छाते तन्वि । स्पष्टमन्यत् ॥ ६२ ॥

**तिण्णि** इति ।

**तिण्णि रहाइं ठवेप्पिणु वे गअ णिहणइं कण्णु ।**
**ए उप्फुल्लअलक्खण पच्छद्धेवि ण अण्णु ॥ ६३ ॥ [उत्फुल्लकं] ।**

त्रीन् रथान् स्थापयित्वा द्वौ गजौ निधने कर्णम् ।
इत्युत्फुल्लके लक्षणं पश्चार्धेऽपि नान्यत् ॥ ६३ ॥

रथत्रयं स्थापयित्वा पश्चा[त् गजद्वयं कर्णं च स्था]पयेति शेषः । एतदुत्फुल्लके पश्चार्धेऽपि लक्षणम् । अत्रापि द्विपथकवद्यतिविधानम् ॥ ६३ ॥

[**चामर** इति ।]

**चामरभावजुअं हाराण जुअं च पिए**
**दीसइ मुत्तिअआ रूवाण जुअं च सआ ।**
**हारविहूसिअअं सद्दाण जुअं छउए**
**अ(अं)ति णिओइअअं पाए जइ णेउरअ(आ) ॥ ६४ ॥**
**मत्तागणवण्णसमं असक्कीरी (अस्सक्कंता ?) ॥**

चामरभावयुगे(गं) हारयोर्युगं च प्रिये दृश्यते मौक्तिकं रूपयोर्युगं सदा ।
हारविभूषितं शब्दयोर्युगं छाते अन्ते नियोजितं पादे यदि नूपुरम् ॥ ६४ ॥

अस्यैवार्थं च गाथामाह—**गाहा** इति ।

---

१ मुग्धे कुरु शोभने AB. २ विलक्षणं A; चिह्लक्षणं B. ३ Between मौक्तिकं and रूपयोः both A and B add रूपप्रसाधनशोभितं रस. ४ दस AB. ५ वियोजितं AB. ६ नपर B; नपुर A.

गाहा तह अ विरामे दीसइ पसअच्छि तो विआणेज्ज ।
अं(सं)गअअं णाम इमं मत्ताविताण मज्झम्मि ॥ ६५ ॥
गाहा अणंतरवत्थुअसहिआ संगअं ॥ [संगतकं] ।

गाथा तथैव विरामे दृश्य[ते] प्रसृताक्षि ततो विजानीहि ।
संगतकं नामैतत् मात्रावृत्तानां मध्ये ॥ ६५ ॥

चामरश्च ता(भा)वश्च तयोः प्रथमं युगम् । पश्चात् हारयो रवि(पि) युगं यदि दृश्यते मौक्तिकं चानन्तरं पश्चाच्छेद्युगं छाते तन्वि पादचतुष्टयविरामे गाथा दृश्यते यदि च ततः संगताख्य-मेतन्मात्रावृत्तानां मध्ये वृत्तं जानीहि[3] ॥ ६५ ॥

**विसम** इति ।

विसमम्मि पिए तिण्णि गआ
चामरअं च विरामए ट्ठिअं ।
दि(दो) तुरआ चावं च समे
बिंदुतिलए धअं च पाअए ॥ ६६ ॥ [बिन्दुतिलकं] ।

विषमे प्रिये त्रयो रा(ग)जाः चामरं च विरामे स्थितम् ।
द्वौ तुरगौ चापश्च समे बिन्दुतिलके ध्वजश्च पादे ॥ ६६ ॥

बिन्दुतिलकश्च(स्य) विषमपादे चतुर्मात्रास्त्रयो गुरो(रु)श्चेति भवति । समे तु द्वौ चतुर्मात्रौ पश्चात्पञ्चमात्रस्ततो ध्वज इति भवति ॥ ६६ ॥

**पढम** इति ।

पढमं द[इ]ए होइ तुरंग अंसें
बीअं च गअं तइअं सदणं च ।
विहआहिवई चामरअं च पाए
वी[थि]त्ति ई(इ)मं जाणसु च्छंदअम्मि ॥ ६७ ॥ [वीथी] ।

प्रथमं दयिते भवति तुरगः एतस्य द्वितीयश्च गजस्तृतीयः स्यन्दनश्च ।
विहगाधिपतिर्विषधरश्च पादे वीथीत्येतज्जानीहि छन्दसि ॥ ६७ ॥

एतद् वीथ्याख्यं वृत्तं जानीहि यस्य चतुर्मात्रच(त्र)यस्यान्ते मध्यलँघुश्चतुर्थगुरुर्वा भवति गुरुश्च ॥ ६७ ॥

**दीसइ** इति ।

---

१ प्रसृत्यक्षि B; प्रवृत्यक्षि A. २ छंदयुगं AB. ३ Both A & B add वस्तुकोदाहरणं. ४ अस्स Com. ५ Does the Com. read विहआहिव विसहर व गरुअ अ पाए ? ६ The translation should be चामरं च for विषधरश्च. The alternative Gana विषधर् IIIS seems to be suggested by the Commentator and the words विषधरश्च here (in the place of चामरं च) and चतुर्थलघु(गुरु)र्वा in the explanation appear to be added by him by way of gloss. ७ मध्यगुरुश्चतुर्थलघुर्वा AB.

दीसइ पाअए
जत्थं[1] गअंदअं ।
अंतसुवण्णअं
तं ओलंबअं ॥ ६८ ॥ [अवलम्बकं] ।

दृश्यते पादे यस्य गजेन्द्रः ।
अन्ते सुपर्णस्तदवलम्बकम् ॥ ६८ ॥

गजेन्द्रः सामान्येन चतुर्मात्रः । सुपर्णो मध्यलघुः ॥ ६८ ॥

**पक्खिणाहा** इति ।

पक्खिणाहा दुवे कण्णं
पडहरसरवकरं ।
चाव विहवाहिवं
दोसु अ चउप्पअं ॥ ६९ ॥ [चतुष्पदं] ।

पक्षिनाथौ द्वौ कर्णः पटहर[2]सरवकरम् ।
चापविहगाधिपती द्वयोश्च [चतुष्पदम्] ॥ ६९ ॥

[च]तुष्पदं नाम वृत्तं यस्य प्रथमपादे पक्षिनाथौ द्वौ कर्णश्च भवति । द्वितीय(ये) पटहश्च रवश्च रसश्च करश्च तत् पटहरसरवकरम् । पटहस्त्रिलघुर्गणः । अनन्तरं तृतीय(ये) चतुर्थे च पृथक् चा[3]पो विहगाधिपतिश्चेति ॥ ६९ ॥

ई[4]यं केवलं चतुष्पदा । युक्तचतुष्पथा(दा)या गाथा(थ)या लक्षणमाह—**अवलंबक** इति ।

ओलंबअएक्कअं(अ)जोइआ जुआ सा चउप्पआ च्छंद ।
सा[5]हेमि एक्कअं णाम वज्जिअं लक्खणे णामं ॥ ७० ॥
गाहा वीअचउप्पअत्थे बाणंतुधयं एक्कआ ॥ [एककं] ।

अवलं[6]बकैककयोजिता युता सा चतुष्पदा च्छन्दसि ।
साधयत्येककं नाम वर्जितं यस्य लक्षणे नाम ॥ ७० ॥

अवलम्बकेनोक्तलक्षणेन एककेन च वक्ष्यमाणेन योजित(ता) द्वाभ्यामन्यतमेन वा युक्ता[7] चतुष्पदा नाम छ[8]न्दसि भवति तस्यैककं नाम साधयामि । गुणा(त्रिगुण?)त्रिमात्रेण चैकेणै(नै)व प(पा)देन एककानि रचनीयानि ॥ ७० ॥

**जस्स** इति ।

---

१ जस्स Com. २ पटहकरसनवकं AB. ३ कापो AB. ४ हेयं AB. ५ साहेइ Com. ६ अवलम्बिकैकयोजिता AB. ७ युक्तश्चतुष्पदानां छन्दसि AB. ८ रचनानि AB.

जंत्थ रहं रहंगअं च पाए
दीसइ मुद्धिए णरिंदअं च ।
अंते कण्णअं च सोहणं से
वेण्टलअंति जाण छंदअम्मि ॥ ७१ ॥ [वृन्तलकं] ।

यस्य रथो रथाङ्गं च पादे दृश्यते मुग्धे नरेन्द्रोपि ।
अन्ते कर्णश्च शोभनश्च वृन्तलकमिति जानीहि छन्दसि ॥ ७१ ॥

स्पष्टमिदम् ॥ ७१ ॥

पक्खिणाह इति ।

पक्खिणाहअं दाविअं
सद्दअं च कण्णो रवं ।
णेउरं च पाअंतए
हंसिणीअ पाए पिए ॥ ७२ ॥ [हंसिनी] ।

पक्षिनाथो दर्शितः शब्दश्च कर्णो रवः ।
नूपुरस्तथान्ते हंसिन्याः पादे प्रिय(ये) ॥ ७२ ॥

दाविअं दर्शितम् । हंसिनीति नाम । स्पष्टमन्यत् ॥ ७२ ॥

खडहडकलक्षणार्थं गाथामाह—भमरावलीअ इति ।

भमरावलीअ अंते गाहा जइ दिज्जए पओएसु ।
तं जाणह खडहडअं पुव्वकईहिं विणिद्दिट्ठं ॥ ७३ ॥
गाहा खडहडअलक्खणत्थे । [खडहडकं] ।

भ्रमरावल्या अन्ते गाथा यदि दीयते प्रयोगेषु ।
ततो जानीहि ष(ख)डहडकं पूर्वकविभिर्निर्दिष्टम् ॥ ७३ ॥

अन्ते गाथाविधानात् खडहडकं इति पूर्वकविभिर्नाम निर्दिष्टम् ॥ ७३ ॥

उदाहरणमाह—जइ पीणसमुण्णअ इति ।

जइ पीणसमुण्णअसंगअआ थणआ
जइ मंथरलोअणभूसिअअं वअणं ।
जइ वित्थइपीणविसंठुलओ जहणो
जइं तंबिरपल्लवकोमलओ अहरो ॥ ७४ ॥

यदि पीनसमुन्नतसंगतौ स्तनौ यदि मन्थरलोचनभूषितं वदनम् ।
यदि विस्तृतपीनविसंष्ठुलं जघनं यदि ताम्रपल्लवकोमलोऽधरः ॥ ७४ ॥

---

१ जस्स Com. २ वृत्ततिलकमिति AB. ३ पक्खिणोणाहि AB. ४ कण्णरवं AB. ५ पाअअंतए AB. ६ दाविउं दर्शिता AB. ७ गरुडअलक्षणार्थं AB. ८ घटहदयं इति AB.

इति भ्रमरावली ॥ ७४ ॥ गाथामाह—

**ता कीस हिअअ रत्तिं दिअं च णो णिव्वुइं तुअं लहसि ।**
**दुल्लहमग्गिर विणिअत्त अहव संतो णिअत्तिहिसि ॥ ७५ ॥** खडहडअं [खडहडकं] ।

तत्कस्माद्धृ[1]दय रात्रिं दिवं च नो निर्वृतिं त्वं लभसे ।
दुर्लभमार्गे वि[2]निवर्तस्वाथवा शान्तं [नि]वर्तिष्यसे ॥ ७५ ॥

कश्चिद्दरिद्रियुवा वेश्यामासाद्य कुमारीवने पयोधराक्रान्तां दृष्ट्वा मन्मथाभिसंतप्तः तां च दुर्लभां मन्यमानो स्वहृदयमुपालभते । हे हृदय यदि नाम तस्याः पीनौ मांसलौ समुन्नतौ उत्तुङ्गौ[3] संगतौ[4] निपीडितपरस्परौ स्तनौ[5], यदि नाम तस्याः मन्थराभ्यां अलसवलिताभ्यां लोचनाभ्यां भूषितं. मण्डितं मुखं, यदि च तस्याः विस्तृतः पृथुः[6] पीनो घनः तथा[6] विसंष्ठुलो मर्दन(मन्थर ?)गतिः जघनः कटिदेशो यस्याः, यदि च ताम्रपल्लवकोमलोऽभिमतो वाधरः[7] तत् त्वं कथं[8] विनिवर्तस्व विरम्यतामस्माद्व्यवसायात् । अथवा सान्तः[9] उपरतः[9] सन्निवर्तिष्यस इति ॥ ७५ ॥

**पक्खिणाह** इति ।

**पक्खिणाहअं पिए**
**पत्थिवं च बीअअं ।**
**णेउरं च अंतए**
**खेडअस्स पाअंए ॥ ७६ ॥** [खेटकं] ।

पक्षिनाथः प्रिये पार्थिवश्च द्वितीयः ।
नूपुरश्चान्ते खेटकस्य मुग्धिके ॥ ७६ ॥

विस्पष्टम् ॥ ७६ ॥

**णेउरं[10]** इति ।

**णेउरभावमणिं सरसं जइ अ(मु)त्तिअअं**
**पेच्छसि पीणपओहरिए फरिसाण जुअं ।**
**पाअजुअं च सणेउरअं पुरओ ट्ठविअं**
**जाणसु लक्खणअम्मि मणोहरअं दइए ॥ ७७ ॥**
**मत्तागणसमं अणिदिट्ठरूअअं ।**

---

१ वृत्तय AB. २ दुर्व्वभसार्गेत्विनिवर्तस्व AB. ३ वा उत्तुङ्गी AB. ४ मुन्नतौ AB. ५ स्तनं AB. ६ पृथुपीनघनतथा AB. ७ वाधनः AB. ८ कलं AB. A portion of the Com. after this word is evidently lost. ९ सातैः उपनतः AB. १० मुद्रि. Com. ११ वकेति AB.

**नूपुरभावमणिं सरसं यदि मौक्तिकं प्रेक्षसे पीनपयोधरे स्पर्शयोर्युगम् ।**
**पाद[युगं च] सनूपुरं पुरतः स्थितं जानीहि लक्षण(णे) मनोहरं दयिते ॥ ७७ ॥**

तन्मनोहरं[1] रमणीयं लक्षणे जानीहि । यस्याः प(पा)दे नूपुर[2]श्च भावश्च मणिश्च तद्यदि प्रेक्षसे सह रसेन[3] वर्तमाने(नं) मौक्तिकं गुरुं अनन्तरं च यदि स्पर्शयुगं पश्यसि पुरतश्चाग्रे पादयोर्युगं सह नूपुरे[ण] वर्तमानम् । चरणाः पञ्च गुरुश्चेत्यर्थः[4] ॥ ७७ ॥

ततः किं भवतीत्याह—**इअ पाआण** इति ।

**इअ पाआण चउण्हवि अंते गाहा पउंजए जत्थ ।**
**सोआणअंति णामं तस्स कइं(ई)हिं विणिम्माअं ॥ ७८ ॥** [सोपानकं] ।

**इति पादानां चतुर्णामन्ते गाथा प्रयुज्यते यत्र ।**
**सोपानक[5] इति नाम तस्य कविभिर्विनिर्मितम् ॥ ७८ ॥**

इअ इति । पादचतुष्टयस्यान्ते गाथायाः सोपानक इति नाम भवति ॥ ७८ ॥

**पढम** इति ।

**पढमणिरूविअअं जइ से गंअंदअं[6]**
**वीअं संदणअं तइअं तुरंगअं ।**
**जइ वाणासणअं विरमे धअग्गअं**
**जीअं[7] सुमणोहरंगिअ[8] सालभंजिअं ॥ ७९ ॥** [सालभञ्जिका] ।

**प्रथमनिरूपितो यद्यस्य गजेन्द्रः द्वितीयः स्यन्दनस्तृतीयस्तुरंगः ।**
**यदि बाणासनं विरामे ध्वजाग्रं जानीहि मनोहराङ्गि तां सालभञ्जिकाम् ॥ ७९ ॥**

[तां सालभञ्जिकां] जानीहि यदि गजेन्द्रादयः पादे निरूपिता भवन्ति ॥ ७९ ॥

त्रिकलकादीनां[9] लक्षणमाह—**जइ[10] तिअलअस्स** इति ।

**जइ तिअलअस्स पुरओ दिज्जइ गाहा तलं[11] ति तं जाण ।**
**पुरओ अंते अ जहिं णअंगि तं तालविण्ह(ण्ठ)त्ति ॥ ८० ॥** [तल-तालवृन्ते] ।

**यदि तृ(त्रि)कलकस्य पुरतो दीयते गाथा तलमिति तत् जानीहि ।**
**पुरतोन्ते च यदि नताङ्गि तत्तालवृन्तमिति[12] ॥ ८० ॥**

त्रिकलकस्याद्यस्थितया गाथया तदा(ला)ख्येत्यु[त्प]द्यते तस्यैवाद्यन्तवर्तिन्या तया तालवृन्तसंज्ञा भवति ॥ ८० ॥

**साअर** इति ।

---

१ दयिते तन्मनोहरं repeated after this word in both A & B. २ नूपुरास्य AB. ३ रेसे च AB. ४ चेदित्यर्थः AB. ५ सौधानामक इति AB. ६ गअंदइयं AB. ७ जाणसु मणो० Com. ८ सुमणोहरत्तिअं AB. ९ त्रिकाभिकादीनां. १० धइ तिअआलस्सेति. ११ तलम्मि तं AB. १२ तालवृन्तमित्तमिति AB.

साअरपाअघडिअपाअक्कतुरंगअं
गअरहविहअणाहविणिओइअअंतअं ।
सम[1]रणिउत्ततुरअकरवालरहंगअं
पाणिधअग्गएहिं उग्गीअअ रूअअं ॥ ८१ ॥ [उद्गीतकं] ।

सागरपादरचितपदातितुरंगं गजरथविहगनाथविनि[2]योजितान्तम् ।
समरे [3]मुखे तुरगकरवालरथाङ्गं पाणिध्वजा[ग्रा]भ्यामुद्गीतकरूपकम् ॥ ८१ ॥

यत्र सागरपादे विषमपादे रचितः पदातिः तुरगश्चेद्भवति । किंभूतम् । गजरथविहगनाथैर्विनियोजितोन्तो यस्य । तत्राङ्ग(?) समरमुखे तुरगकरवालरथाङ्गं भवति । कीदृक् । पाणिध्वजाग्राभ्यामुपलक्षितम् । तदुद्गीतकस्य रूपकम् । विहगनाथो गरुडः । करवालः पञ्चमात्रः ॥ ८१ ॥

जइ पेच्छसि इति ।

जइ पेच्छसि पीणपओहरिल्लिए
जोहं स[4]रहं तुरअं णरिंदअं ।
विरमे कडअं व[5]ण्णोज्जलं ठियं
ल[6]क्खणए भण्णइ सा मणोरमा ॥ ८२ ॥ [मनोरमा] ।

यदि पश्यसि पीनपयोधरिके यो[7]धं सरथं तुरगं नरेन्द्रम् ।
वि[8]रामे कटकं वर्णोज्ज्वलं स्थितं लक्षणे जानीहि तां मनोरमाम् ॥ ८२ ॥

यदि योधादिसंज्ञाचतुष्टयोपलक्षितं चतुर्मात्रचतुष्टयं पश्यसि ततस्तामस्मिन् लक्षणे मनोरमां जानीहि । वर्णैरक्षरैरुज्ज्वलमिति सकलगणविशेषणम् ॥ ८२ ॥

पुरओ इति ।

पुरओ रहं[9] णरिंदं च्छउए जइ पाए
णवरि तु[10]रअं विसालं पसअच्छि णिउत्तं ।
पाइक्कआण दोण्हं अंते जइ चमरं
अंतुल्लअंति छंदे तं जाण ण[11]अंगि ॥ ८३ ॥ [अन्तुल्लकं] ।

पुरतो रथं नरेन्द्रं छाते यदि पादे अर्ध(न)न्तरं गजं विशालं प्रसृताक्षि नियुक्तम् ।
पदा[12]त्योर्द्वयोरन्ते यदि च[13]मरं अन्तु[14]ल्लकमिति मुग्धे तं जानीहि नताङ्गि ॥ ८३ ॥

छउए [15]तन्त्रि । णवरि अनन्तरम् । विशा(सा)लं विस्तीर्णं गजविशेषणमेतत् । स्पष्टमपरम् ॥८३॥

जत्तु पिए इति ।

---

१ समरे मुहे Com. २ विनिर्दिष्टं AB. ३ ममनखे AB. ४ सरअंहं AB. ५ चणोज्जलं धियं AB. ६ लक्खणए जाणसु तं मणोरमं Com. ७ कोवं AB. ८ विनामं AB. ८ The words चतुर्मात्रचतुष्टयोपलक्षितं are found before this word in A & B. ९ रहणरिंदच्छउए AB. १० अ गअं Com. ११ णअम्मि AB. १२ पादायोः AB. १३ चरसं AB. १४ अन्धुलकं AB. १५ तथी AB.

**जंइ[1] अ पिअं(ए) तिण्णि गआ**
**समरे अहिअं णेउरअं ।**
**पसअच्छि विआण सआ**
**चंदोज्जे(ज्जो)अअ वित्तमिमं ॥ ८४ ॥** [चन्द्रोद्योतकं] ।

यत्र प्रिये त्रयो[2] गजाः समरे[3] अधिकं नूपुरम् ।
प्रसृता[4]क्षि विजानीहि सदा चन्द्रोद्योतकवृत्तमिदम् ॥ ८४ ॥

यत्र सर्वत्र पादेषु चतुर्मात्रत्रयं भवति समरे समपादे य[5]न्नूपुरं त[5]च्चन्द्रोद्योतकाक्षं[ख्यं] वृत्तं जानीहि ॥ ८४ ॥

**पढम** इति ।

**पढमगइंदविणि[6]ओइएहिं**
**वीअअतइअतुरंगमएहिं ।**
**जाणसु कँ[7]ण्णविरामअएहिं**
**सुंदरि रासा[8]णं अ पाएहिं ॥ ८५ ॥** [रासः] ।

प्रथमे गजेन्द्रै[9]विनियोजितैर्द्वितीयतृतीयकतुरंगमैः ।
जानीहि विरमेस्थितकर्णैः सुन्दरि र(रा)सानां पादैः ॥ ८५ ॥

प्रथमेन गजेन्द्रेन(ण) नियोजिता यैते(यैस्ते) तथा । ए[10]वं सर्वत्रैव बहुव्रीहिर्द्रष्टव्यः ॥ ८६ ॥

संदानि[तं]कादीनां लक्षणमाह—**दोहिं संदाणिअअ** इति ।

**दोहिं संदाणिअअं तिहि गाहाहि अ विसेसअं णामं ।**
**चउजुत्तं चक्कलअं पंचहि कुलअं च णाअव्वं ॥ ८६ ॥**

द्वाभ्यां सन्दानितकं तिसृभिर्गाथाभिर्विशेषकं जानीहि ।
चतुर्युक्ते चक्कलकं पञ्चभिः कुलकं ज्ञातव्यम् ॥ ८६ ॥

एकवाक्या(क्य)निबन्धनेन द्वयोः संदानितकाख्या भवति । एवं तिसृणां विशेष[क]संज्ञा[11] । त[11]द्वच्चति(त)सृणां चक्कलकाख्या । तथैव पञ्चानां कुलकाभिधा । अत्र च गाथोपलक्षणम् । तेन सर्वेषां वृत्तानां संदानितकादिसंज्ञा एव(वं) प्रवर्तन्ते एव ॥ ८६ ॥

किं च । कुलकाना[12]मन्येऽपि प्रभेदा विद्यन्ते तानाह—**णरा(र)णारायण** इति ।

**णरणाराअणवासुइअणंतकेलाससंकर[13]मइंदा ।**
**दिणअरजीअगुहत्ति अ दस भेआ होंति कुलआणं ॥ ८७ ॥**

---

१ जत्तु पिए Com. २ उपयो AB. ३ समएधेकं AB. ४ प्रसृत्यक्षि AB. ५ तत्–यत् AB. ६ विणिओइअएहिं AB. ७ विरमट्ठिअकण्णेहिं Com. ८ Com. seems to read रासाण पाअएहिं. ९ गजेन्द्रोनियोजितैः AB. १० अन्यत्र ? or प्रथमेन गजेन्द्रो विनियोजितो यैस्ते ? ११ Between संज्ञा and तद्वत् A has तद्वच्चतिचकुलानां वाख्या भवति एवं तिसृणां विशेषसंज्ञा. १२ कुलकानामान्योपि AB. १३ मर्हिंदा Com.

नरनारायणवासुक्यनन्तकैलासशंकरमहेन्द्राः ।
दिनकरजीवगुहा इति दश भेदा भवन्ति कुलकानाम् ॥ ८७ ॥

स्पष्टम् ॥ ८७ ॥

किं च ।

परिवाडीए णामा पंचारंभंमि चोद्दहं जाव ।
एत्ते[1] परेण कव्वं करेह इच्छाइ वीसत्थो(त्था) ॥ ८८ ॥
गाहा कुलयलक्खणत्था ।

परिपाट्या नामानि पञ्चारम्भे चतुर्दश यावत् ।
ततः परेण काव्यं कुरुतेच्छया[2] विश्वस्ताः ॥ ८८ ॥

एतानि नामानि परिपाट्या क्रमेण पञ्चभ्य आरभ्य यावच्चतुर्दश जानीहि । अत्र नाभिनिवेष्टव्यं यद्गाथाभिरेव संदानितकादीनां व्यवस्थितिः । उपलक्षणमात्रकमेतत् । यस्मात् लक्ष्ये हि श्लोकादिति(भि)र्दृश्यन्त एव । ए(त)तश्च [परेण] गुहाख्यादूर्ध्वमिच्छया महाकाव्यादिकं काव्यं कुरुत । केवलं कुलकसंज्ञा न भवतीत्यर्थः । परेणेति तृतीयान्तप्रतिरूपको निपातः ॥ ८८ ॥

गलिता आह—**सत्तिदंड** इति ।

सत्तिदंड[3]करवालतुरंगगअंदआ
अंतअम्मि छउओअरिए सधअग्गआ ।
छंदअम्मि रमणिज्जअ सोम्मिअ[4] सरिसिए
तं विआण संपिंडिअअं गलिअं पिए ॥ ८९ ॥ [संपिण्डिता] ।

शक्तिदण्डकरवालतुरंगगजेन्द्राः[5] अन्ते छातोदरि सध्वजाग्राः ।
छन्दसि रमणीयके(क)सोम्यासदृशीं तां विजानीहि संपिण्डितां गलितां प्रिये ॥ ८९ ॥

हे प्रिये तां संपिण्डिताख्यां गलितां जानीहि । यस्याः शक्तिश्च दण्डश्च करवालश्च तुरंगमश्च गजेन्द्रश्चेति भवन्ति । द्वौ पञ्चमात्रौ द्वौ चतुर्मात्रावित्यर्थः । करवालश्च खड्गः । ते चान्ते विरामे सह ध्वजाग्रेण त्रिमात्रेण वर्तमानाः । किंभूताः(तां) संपिण्डिताम् । रमणीयकस्य वृत्तस्य (४.२६) सोम्यायाश्च द्विपद्याः (३.२७) सदृशी ॥ ८९ ॥

अह रह इति ।

अह रहथणगइंदणरणाहतुरअथणहार-
संदण[6]अणरवरिंदगअथणहरा सतुरआ[7] ।

१ तत्तो Com. २ च्छाया विध्वस्ताः AB. ३ सत्तिदंडडकर० AB. ४ सोमाअ AB. ५ तुरंगमश्च गजेन्द्र AB. ६ संदणाण णर० AB. ७ सतुरंताआ AB.

पमुहदुमत्त[1]अंस णरणाहठाणए जइ हुवंति
पसअच्छि विप्पआ तो पिए विसाला ॥ ९० ॥ [विशाला] ।

एषा रथस्त[2]नगजेन्द्रनरनाथतुरगस्तनभर[3]स्यन्दनकरन[र]वरेन्द्रगजस्तनभराः सतुरगाः ।
प्रमुखद्विमात्राश्च नरनाथस्थाने यदि भवन्ति प्रसृता[4]क्षि विप्राः ततः प्रिये विशाला ॥ ९० ॥

तत एषा विशालाख्या गलिता प्रिये भवति । यदि रथश्च स्तनश्च गजेन्द्रश्च नरनाथश्च तुरगश्च स्तनभरश्च स्यन्दनश्च नरवरेन्द्रश्च गजश्च स्तनभरश्चेति तुरगेण सह भवन्ति । एकादश चतुर्मात्रा इत्यर्थः । किंभूताः । प्र[5]मुखे द्विमात्रो येषाम् । अस्य एव मध्यगुरुस्थाने विप्रा न विरुध्यन्ते ॥ ९० ॥

**विच्छं(च्छि)त्तीअ** इति ।

विच्छित्तीअ दुमत्तं तह पंच अ जोहा ।
मुद्धे णरवइरहिआ कइसत्थणिउत्ता ॥ ९१ ॥ विच्छित्ती ।

विच्छित्तेर्द्विमात्रः तथा पञ्च [च] योधाः ।
मुग्धे नरपतिसहिताः कविसार्थनियुक्ताः ॥ ९१ ॥

विच्छित्तेः कविसार्थेन स्वप्रबन्धेषु[6] द्विमात्राः प्रमुखे नियुक्ताः पश्चाच्चतुर्मात्राः पञ्च । अस्या मात्राभ्यो द्वादशभ्यो यतिः कार्येत्युदाहरणेनोक्तम् ॥ ९१ ॥

**भामिनि(णि)** इति ।

भामिणि रहणरिंदपाइक्कराअ[7]संदण णअंगि सुरवार[8]णिंदा ।
पमुहे पसरिआइ णिअमेण होंति[9] धवल[10]च्छि दोतइअ[11]पंचमत्ता ॥ ९२ ॥ [प्रसृता] ।

भामिनि रथनरेन्द्रपदातिर(रा)जतुरगा नताङ्गि स्व(सु)रवारणान्ताः ।
प्रमुखे प्रसृतायाः नियमेन भवन्ति प्रसृता[12]क्षि द्वे तिस्रः पञ्चमात्राः ॥ ९२ ॥

रथ[13]श्च नरेन्द्रश्च पदातिश्च राजा च तुरगश्च ते प्रसृतायाः भवन्ति । किंभूताः । सुरवारण आदिलघुरन्ते येषाम् । किं च । अस्या एव प्रमुखे आदौ द्वे तिस्रः पञ्च चेति साकल्येन दशमात्रा भवन्ति । एयमवर्धलिप्ताः (?) ॥ ९२ ॥

**पंचमतइअअ** इति ।

पंचमतइअसुअण्णआ र[14]अणविरामएसु
कइव[15]संहेहिं णिउ[15]त्तआ भामिणि कव्वए[16]सु ।
पढमअवीअचउत्थया महुरक्खरिल्लएसु
तिण्णि वि मुद्धे जोहआ ललिआपाअएसु ॥ ९३ ॥ ललिता ।

---

१ पमुहदुमत्तआ अ Com. २ सुरगजेन्द्र AB. ३ भारस्यस्यन्दन AB. ४ प्रभृत्यक्षि A; प्रसृत्यक्षि B. ५ प्रबुद्धैर्द्वि० AB. ६ स्वप्रबन्धबुद्धिमात्राः AB. ७ राअतुरआ Com. ८ सुरवारणंता Com. ९ होंति सअधव० AB. १० पसअच्छि Com. ११ दो तइअअ पंच० AB. १२ प्रसृत्यक्षि AB. १३ Both A and B add स्यन्दनश्च after this word. १४ रअणं विरामएअंतएसुं AB. १५ सुकइवसएहेहिं सुणिउत्तआ AB. १६ कव्वेठएसु AB.

पञ्चमतृतीयसुव(प)र्णौ रत्नविरामेषु कविवृषभैर्नियुक्ता भामिनि काव्येषु ।
प्रथमद्वितीयचतुर्थी मधुराक्षरेषु त्रयोऽपि मुग्धे योधा भवन्ति [ललितापादेषु] ॥ ९३ ॥

[ललिता]पादेषु[1] पञ्च[म]तृतीयौ सुपर्णौ गरुडौ जातः(तौ) किंभूतेषु । रत्नं विरामे येषाम् । तथा प्रथमद्वितीयचतुर्थास्त्रयोपि योधा भवन्ति । किंभूताः । [भामिनि] काव्येषु स्वप्रबन्धेषु मधुराक्षरेषु कविवृषभैः कविश्रेष्ठैः नियुक्ता रचिताः ॥ ९३ ॥

थणहर इति ।

थणहरो सअण्णो णरिंदओ ।
पमुहए[2] अ दिण्णो दुमत्तओ ।
पा[अ]एण पाउ(ओ) अ जं[3] ठिउ(ओ)
तं विआण[4] अंते विहूसणं ॥ ९४ ॥ [विभूषणा] ।

स्तनभारः सकर्णौ नरेन्द्रः अन्तप्रमुखे दत्तद्विमात्रः
पादेन पादो यदि यमितः तां विजानीहि छन्दसि विभूषणाम् ॥ ९४ ॥

तां विभूषणां जानीहि यस्या प्रमुखे स्तनहारो मध्यगुरुः सह कर्णेन वर्तमानः ततोऽपि मध्यगुरुरेव[5] । अन्ते प्रमुखे च दत्तः[6] द्विमात्रो यस्येति पादविशेषणम् । पादेन च सह यदि पादो न(य)मितः । यद्यपि सर्वा गलिताः[7] सँयमका वक्ष्यति तथापीह वचनं समस्तपादनिवृत्त्यर्थम् ॥ ९४ ॥

सामुग्गअ इति ।

सामुग्गअंति णामेण रूवअं विरई(इ)अं मए जं च ।
सा उग्गअत्ति गलिआ जमएहिं [पुरिल्लिअकएहिं] ॥ ९५ ॥

सामुद्गक इति नाम रूपकं विरचितं मया यच्च ।
सा उद्गतेति गलिता यमकैः पौरस्त्यकृतैः ॥ ९५ ॥

स(सा)मुद्गत(क)मेवोद्गता । उद्गतायाः पुरः[9]स्थिता यमकरचनेति विशेषः । स(सा)मुद्गकस्यान्ते 'गएंहिं[10] विलग्गएहिं' (४·५६) इत्यादिना यमको दर्शितः ॥ ९५ ॥

पंचम इति ।

---

१ The writer of the palm leaf ms. has dropped the portion of the Com. from पादेषु upto योधा ( both inclusive ). The dropped portion of the Com., however, is given in the Commentary on the next stanza; see note 7 below; we actually get the following commentary on this stanza : किंभूताः । किंवृषभैः कविश्रेष्ठैः स्वप्रबन्धेषु नियुक्ता रचिता भवन्ति । किंभूताः भवन्ति । कविवृषभैः कविश्रेष्ठैः नियुक्ता भामिनि काव्येषु स्वप्रबन्धेषु । प्रथमद्वितीयचतुर्थ-मधुराक्षरेषु त्रयोपि दव्वे रचिता नियुक्ताः । २ अंतपमुहदिण्णो Com. ३ Com. seems to read जंमिओ. ४ छंदे Com. ५ मध्यगुरु एव AB. ६ दंतो त्रिमात्रो AB. ७ The dropped portion of Commentary on v. 93 mentioned in note १ above ( from ललितापादेषु to त्रयोपि योधाः both inclusive) is copied out here between the words गलिताः and सयमकाः in both A & B. ८ Reconstructed from Com. ९ पुनःस्थिता यामकरचनेति AB. १० गवहिं विलग्गएहिं AB.

पंचमत[इ]अएहिं मुद्धे णराहिवेहिं ।
बीअचउत्थछट्ठगअतुरअसंदणेहिं ॥
प(पा)आ पमुह[अ]म्मि घडिआ दु[म]त्तएहिं
जाणह लंबिआएँ गलिआएँ पाअएहिं ॥ ९६ ॥ लंबिआ [लम्बिता] ।

पञ्चमतृतीय(यैः) मुग्धे नराधिपैः[1] द्वितीयचतुर्थषष्ठैर्गजतुरगस्यन्दनैः ।
पादाः प्रमुखे घटिता द्विमात्रैः जानीहि लम्बितायाः गलिता[याः] प्राकृतैः[2] ॥ ९६ ॥

प्राकृते(तैः) प्राकृतभाषायां लम्बितायाः गलितायाः पादाः[3] घटिताः । पञ्च[म]तृतीयैर्नराधिपैरुपलक्षिताः द्वितीयचतुर्थषष्ठैः सामान्येन चतुर्मात्रैरिति । अत्र प्रमुखे र(च) द्विमात्रैरुपलक्षिताः ॥ ९६ ॥

**पमुहअ** इति ।

पमुहअविरमएसु पाँए[4] दुमत्तआ
पंचमतइअआएँ मुद्धे णरिंदआ ।
बहुकइसत्थएण बहुसो णिरूविआ
बीअचउत्थजोह[5]सहिअत्ति सा सुहा ॥ ९७ ॥ [सुधा] ।

प्रमुखे विरामे यस्या द्वि[6]मात्रौ पञ्चमतृतीयौ मुग्धे नरेन्द्र(न्द्रौ) ।
बहुकविसार्थेन[7] बहुशो निरूपिता द्वितीयचतुर्थयोर्ध[8]सहितेति [सा] सुधा ॥ ९७ ॥

[सा] सुधा नाम गलिता यस्य(स्या) बहुना कविसार्थेन कविसमूहेन प्रमुखे र(त)था विरामे द्विमात्रौ निरूपितौ । द्वितीयचतुर्थाभ्यां [योधाभ्यां] सहितेति सुधाविशेषणम् ॥ ९७ ॥

**तुरअ** इति ।

तुरअरहं प(पा)इक्कं णराहिवं जत्थं
दीसइ[10] जीअ तुरंगं सचामरं अन्ते ।
थोरोरु विअडजहणे सुदीहराच्छिजुए
सा कुमुइणित्ति भणिआ कईहिं णिउणेहिं ॥९८॥ कुमुहइणी [कुमुदिनी] ।

तुरगरथं पदातिर्नराधिपो मुग्धे दृश्यते यस्यास्तुरंगः[11] सचामरोऽन्ते[11] ।
थोरोरुविकटजघने सुदीर्घतरा[12]क्षियुगे सा कुमुदिनीति भणिता कविभिर्निपुणैः ॥ ९८ ॥

एवंभूता कुमुदिनीति भणिता । तुरगश्च रथश्च तुरगरथम् । थोरं परिवर्तुलम् । विकटो विस्तीर्णः स्पष्टमन्यत् ॥ ९८ ॥

**पढम** इति ।

---

१ नराधिपैरुपलक्षितैः द्वितीय० AB. २ प्राकृतायाः प्रकृते AB. ३ पादघटिताः AB. ४ जीए Com. ५ जोहसमणिहिअत्ति सा सुहा AB. ६ द्वौ मात्री AB. ७ सार्थः AB. ८ योवहसितेति AB. ९ मुद्धे Com. १० दीसइ जत्थ जीअ तुरंग सचामर अन्ते AB. ११ तुरंगैः समरैते AB. १२ सुदीक्षितराक्षयुगे B. A drops all portion from सुदीक्षित to एवंभूता कुमु- (both inclusive) in the next line.

पढमगअंदबीअकरवालबंधसुविहूसिअं
तइअणिउत्तवाणसचउत्थचारुथणहारिअं ।
संदणओ पुणोवि धअवट्टएण अइसोहिअं
जाणस(सु) छंदअम्मि मुद्धमुहिए इम(मं) णलिणिअं ॥ ९९ ॥ ण(न)लिनी ।

प्रथमगजेन्द्रद्वितीयकरवालबन्धसुविभूषितां तृतीयनियुक्तबाणसचतुर्थचारुस्तनभारिणीम् ।
स्यन्दनः पुनरपि ध्वजपट्टकेनातिशोभितां जानीहि छन्दसि मुग्धमुखि इमां नलिनीम् ॥ ९९ ॥

प्रथमेन गजेन्द्रेणोपलक्षिताम् । द्वितीयेन च करवालेन खड्गेन योऽसौ बन्धो विरचना तया विभूषिताम् । अन्यच्च । तृतीयो नियुक्तो बाणो यस्याः सह च चतुर्थस्थाने स्तनभरे[ण] वर्तते या ताम् । स्पष्टमन्यत् ॥ ९९ ॥

मुखगलितामाह—खंडुग्गअ इति ।

खंड(डु)ग्गअत्ति भणिआ जा पढमं सावि होइ मुहँगलिआ ।
डंडअपयगइणिअमा समंसआ जमिअपाअंता ॥ १०० ॥ [मुखगलिता] ।

खण्डोद्गतेति भणितां या प्रथमं सा[पि] भवति मुखगलिता ।
दण्डकपदगतिनियमां समांशकावस्थितपादान्ता ॥ १०० ॥

या मयास्मिँल्लक्षणे प्रथमं खण्डोद्गता [इति भणिता सा मुखगलिता]ख्या भवति । इयांस्तु भेदो यदियं दण्डकस्य सदृशीं पदरचनां बिभर्ति सदृशैस्त्रिकैर्निबन्धनमादौ लघुस्थितिश्चेति कर्तव्यमित्यर्थः । अन्यच्च । समांशिका समानसंख्यगणा । सम [इति] द्वितीयचतुर्थापेक्षया । प्रथमतृतीयौ यस्याः 'करमेत्त' (४·४७) इत्यादिना नियतलक्षणावेव । एतदुक्तं भवति । प्रथमतृतीयौ खण्डोद्गतासदृशौ द्वितीयचतुर्थौ दण्डकच्छायाविति ॥ १०० ॥

अस्या भेदानाह—पंचगणा इति ।

पंचगणा सत्तगणा णवगणएआह(र)हेहि अ गणेहिं ।
मुहगलिआए भेआ अंसअवड्ढीइ चत्तारि ॥ १०१ ॥
गाहा लक्खणत्थे ।

पञ्चगणाः सप्तगणाः नवगणैकादशभिस्तु गणैः ।
मुख(ख)गलिताया भेदा अंशकवृद्ध्यौ चत्वारः ॥ १०१ ॥

१ The whole line is repeated immediately in AB. २ अइसोहिअं AB. ३ सभूषितं AB. ४ The portion from तृतीय to नलिनीम् is dropped in both A and B. ५ खड्गी योसौ AB ६ विरचनया AB. ७ मुहुगणिआ AB. ८ पयग्गइ AB. ९ भणितो सः AB. १० नियमसमांसक्रोवस्थिता पादान्ता AB. ११ लक्षलक्षणे AB. १२ The portion from इति to गलिता (both inclusive) is dropped in both A and B. १३ स्तृकैः AB. १४ कमेत्त AB. १५ प्रथमतृयौ A; प्रथमत्रयौ B. १६ नवमगणाः एका० AB. १७ वृद्धाश्चत्वारः AB.

चत्वारो मुखगलिताया भेदा भवन्ति अंशकानां वृद्ध्या । तत्रैकः पञ्चगणो द्वितीयः सप्तगणः तृतीयो न[वगणैः] भवति, एकादशभिश्चतुर्थ इति । अत्र केचित् दण्डकपदगी(ग)तीनां नियमोऽयमिति वर्णयन्ति । अपरे सामान्येन गणैरिच्छन्ति । तत्र दण्डकपदगतिपक्षे लघुषट्कादूर्ध्वं गणसंख्याविपक्षा (विकल्पाः?) ॥ १०१ ॥

**तुरअ** इति ।

**तुरअगइंदरहंगआ**
**चउसुवि पाअएसु जीसे ।**
**पअगलिआ सा भण्णइ**
**जमिआ एक्कम्मि पाए ॥ १०२ ॥** [पदगलिता] ।
**पअगलिआलक्खणरूवअं ।**

तुरगगजेन्द्ररथाङ्गादि(नि) चतुर्ष्वपि पादेषु यस्यां।
पदगलिता [सा] भण्यते यमितैकस्मिन्पादे ॥ १०२ ॥

एकस्य पादस्य यादृग्रूपं तादृक् चतुर्णां यथा—'विअलिअविसहिरकसणया' । स्पष्टमन्यत् ॥ १०२ ॥

अपरमपि पदगणि(लि)ताया भेदमाह—**साअ(मु)ग्गअ** इति ।

**सामुग्गअजमएणं जमिआ जा सा विहूसणा णाम ।**
**अट्ठमजमअणिवद्धा पअगलिआ सा विणाअव्वा ॥ १०३ ॥** [पदगलिता] ।

सामुद्गकयमकेन यमिता यासौ विभूषणा नाम ।
अष्टमयमकनिबद्धा पदगलिता सापि ज्ञातव्या ॥ १०३ ॥

विभूषणा नाम या गलिता उक्ता सा यदि सामुद्गकयमकेन निबध्यते तत्सापि पदगलिताख्यां लभते । सामुद्गके यमकः तेन । एतदुक्तं भवति । विभूषणाच्छन्दसि सामुद्गकसंबन्धिनो यमकेनापरापि पदगलिता भवति । यस्मात्पदगलितायाः समस्तपादयमकविधानं सामुद्गके त्वेकदेश एव । एतदेव द्रढयति—**अट्ठ[म]जमय** इति । अष्टभागनिबद्धेन यमकेनेत्यर्थः । यमकानां हि चतुर्भागार्धादिव्यवस्था दृश्यन्ते यतः ॥ १०३ ॥

**पढम** इति ।

**पढमतइआ अ तुरआ अ**
**बीउ(ओ) थणहरो मणी अंते ।**
**विसमन(ग)लिआए समरेसुं ।**
**गअ दो चावआ मणी अंते ॥ १०४ ॥** [विषमगलिता] ।

---

१ यस्य ते AB. २ अष्टपयपरुनिरुद्धा पचगलिता AB. ३ विभूषिता AB. ४ संबन्धिनादयमकेन AB. ५ सा सामुद्गकत्वेकादश एव AB. ६ व्यवस्था या दृश्यन्ते.

प्रथमतृतीयौ तुरगौ च द्वितीयः[१] स्तनभरो मणिरन्ते ।
विषमगलितायाः समरेषु गजं चापकयुगं मणिरन्ते ॥ १०४ ॥

विषमगलितायाः प्रथमतृतीयौ चतुर्मात्रौ द्वितीयः स्तनभरो मध्यगुरुरन्ते च [मणिः इति] विषमपादलक्षणम् । समरेषु समपादेषु गजश्चापयुगं[२] तद्धत्यन्ते च मणिः ॥ १०४ ॥

जीए(अ) इति ।

जीअ तुरंगवाणरहजुअलअधणुपाइक्क(क्का) रहधयवट्टआ ।
माला ईरिसा[३] उत्त वरकविसुइसुहअ विरइआ मइ च्छंदए ॥ १०५ ॥

इअ गलिआलक्खणं समत्तं । माला ।

यस्यास्तुरंगबाणरथयुगलधनुष्पदातयो रथध्वजपटौ ।
मालेदृशी भवति वरकविश्रुतिसुभगोदिता मया छन्दसि ॥ १०५ ॥

मया विरचिता या वरकवीनां श्रुतिसुभगा भवति ॥ १०५ ॥

एवं गलिताया लक्षणमुक्तम् । अनुक्तविषयाणां गलितानां विशेषमाह—**सव्वाणं** इति ।

सव्वाणं चिअ गलिआण जमअवंधं कुणंति कई(इ)वसहा ।
अंसअवसेण एआण तं मए विरई(इ)अं णेहँ[४] ॥ १०६ ॥

सर्वासां [एव] गलितानां यमकबन्धं कुर्वन्ति कविवृषभाः ।
अंशकवशेनैतासां[५] तन्मया विरचितं नैव ॥ १०६ ॥

कविश्रेष्ठाः सर्वासां गलितानां यमकं निबध्नन्त्यंशकवशेन । अल्पांशिकायाः स्वल्पं महत्याश्च महान्तमिति । तन्मया विरचितं नैव उदाहरणेन मातीति (?) शेषः ॥ १०६ ॥

इदानीं सर्वजातिविषयान्तरमाह—**सर्वासु** इति ।

सव्वासु छंदजाइ(ई)सु णरवई एत्थ[६] साहिओ जत्थ[६] ।
जइ होइ तासु विप्पो दोसो वि ण सो गणेअव्वो ॥ १०७ ॥

सर्वासु च्छन्दोजातिषु नरपतिरपि साधितो मया यासु ।
यदि भवति तासां विप्रो दोष इति नासौ गणयितव्यः ॥ १०७ ॥

यासु वृत्तजातिषु मध्यगुरुः कथितः तासु सर्वलघोः स्थितिर्न विरुध्यते इति ॥ १०७ ॥

केषांचिद्वृत्तानां यानीह[७] नामानि कथितानि शास्त्रान्तरेषु यद्यप्यन्यथा दृश्यन्ते तथापि न दोष इत्याह—**अन्नं** इति ।

अण्णं वाहरइ पिआ अण्णं जणणी जहा सिलिंबाण ।
छंदेवि तहा मुद्धे जाणसु वित्ताइं णामाइं ॥ १०८ ॥

---

१ द्वितीयनभरौ AB. २ भुजगश्चापयुगं AB. ३ इरिसा उत्तह AB.; ईरिसी होइ Com. ४ णेव Com. ५ ०वसेनैताकविसां AB. ६ साहिओ मए जासु Com. ७ जानीह A; जानीहि B.

अन्यद् व्याहरते प्रिया अन्यंजननी यथा सिलिम्भानाम्।
छन्दसि य(त)था मुग्धे जानीहि वृत्तानां नामानि ॥ १०८ ॥

एतदुक्तं भवति । नाम्नि नाभिनिवेष्टव्यम्। अत्र दृष्टान्तद्वारेण युक्तिरुच्यते । पुरुषाणां यथा पृथक् वल्लभसुभगदयितादिभिः नामभिर्व्याहरते तथा सिलिम्भा बालास्तेषां च जातवत्सेत्यादिभिर्नामभिर्मातो व्याहरतेऽर्थवशात्तद्वदेव छन्दसि वृत्तानां नामानि बन्धवशात् भवती(न्ती)ति । तथा चोक्तम्—

अपत्यस्य च [जा]तस्य वृत्तस्योत्पादितस्य च ।
नाम स्वच्छन्दतः कार्यं सैतवस्य वचो यथा ॥

इति ॥ १०८ ॥

**परिमाणं** इति ।

**परिमाणं णत्थिच्चिअ णअंगि वी(वि)त्ताण जीअलोअस्मि ।**
**अणुदिअहं कइसत्थो अज्जवि विरएइ अण्णण्णे ॥ १०९ ॥**

**इअ कइसिट्ठुवित्तजाईसमुच्चये चउत्थो णिअमो समत्तो ॥**

परिमाणं नास्त्येव नताङ्गि वृत्तानां जीवलोके ।
अनुदिवसं कविसार्थो अद्यापि विरचयत्यन्यदन्यत् ॥ १०९ ॥

अस्यायमर्थः । वृत्तान्यपरिमेयानि अपरिमेयश्च कविसार्थोऽप्यद्यापि अन्यदन्यन्नवं नवं विरचयति । एतदेव प्रयोजनमाचार्यस्य अस्य स्व(प्र)वृत्तौ पिङ्गलविरचितेषु सत्स्वपि शास्त्रेषु महाकविप्रबन्धेषु दृश्यन्ते यानि वृत्तानि तानीह रचितानि यस्मात्तेन संगृहीतानीति ॥ १०९ ॥

## [इति] चतुर्थो नियमः ।

———

१ अन्यजनिनी AB. २ नामभिर्दात AB.

# पञ्चमो नियमः ।

गौ रत्नांशः ॥ १ ॥

इदानीं वर्णवृत्तानां विषमपदोच्चयविवृतिरारभ्यते । गौर्नाम वृत्तं यस्य रत्नांशमात्रः पादो भवति ॥१॥

मुक्तायुग्मं नौ[1]रित्युक्ता ॥ २ ॥

द्व्यक्षरा नौर्नामोक्ता[2] यस्याः पादे मुक्तायुग्मं गुरुद्वयमुक्तमिति ॥ २ ॥

द्वे रत्ने
वैडूर्यम् ।
सा नारी
ज्ञातव्या ॥ ३ ॥

नारी गुरुत्रयं भवति ॥ ३ ॥

सपटहं
मरकतम् ।
प्रियतमे
मृगवधूः ॥ ४ ॥

मृगवधूर्नाम । पटहः तृ(त्रि)लघुगणः । मरकतो[3] गुरुः[3] ॥ ४ ॥

नूपुरहस्तौ
रत्नविरामौ ।
अक्षरपङ्क्तिर्
नाम मृगाक्षि ॥ ५ ॥

कर्णं कुरु भद्रे
स्पर्शं सपताकम् ।
अन्ते चमरं चेद्
बाले तनुमध्या ॥ ६ ॥

रत्ने नूपुरयुक्ते
भावश्चैव तु पश्चात् ।
कर्णश्चेन्निधनस्थो
भद्रे सा मदलेखा[4] ॥ ७ ॥

---

१ गौ AB. २ नामोक्तौ AB. ३ मरको गुरोः AB. ४ दमलेखा AB.

रसरवसहितं
सपटहचमरम् ।
शशिमुखि सुभगे
हरिविलसितकम् ॥ ८ ॥

हरिविलसितस्य रसरवाभ्यां सहितं सलघुत्रयं च चामरं भवति ॥ ८ ॥

आदौ कर्णौ नित्यं भद्रे
रत्ने तस्मात्पश्चात्कृत्वा ।
अन्ते शुभ्रं मुक्तायुग्मं
ज्ञेयं वृत्तं विद्युन्माला ॥ ९ ॥

रत्ने रसरवौ प्रिये
केयूरमपरं भवेत् ।
रूपं सकटकं सदा
श्यामा सुतनु कीर्तिता ॥ १० ॥

या(श्या)मायाः प्रथमं रत्ने[1] च ते भवतः ॥ १० ॥

नूपुरशब्दनरेन्द्रान्
भामिनि पश्यसि यत्र ।
रूपयुतं[2] यदि कर्णं
शोभनं[3] एष वितानः ॥ ११ ॥

एष शोभनो वितानो नाम यत्र नूपुरादीन्पश्यसि तथा रूपेण च युतं यदि कर्णम् ॥ ११ ॥

चामर[4]भावौ कटकौ
पश्यसि हस्तं दयिते ।
यस्य च नित्यं ललितं
माणवकक्रीडितकम् ॥ १२ ॥

पक्षिनाथवैजयन्ती
रूपहारमौक्तिकानि ।
नीलनीरजाक्षि मुग्धे
मालिनीति नाम वृत्तम् ॥ १३ ॥

---

१ रत्नं रत्ने AB. २ रूपसमेतसकर्णं AB. ३ प्रकट AB. ४ चमर० AB.

द्विजपटहचमरं
　कमलमुखि सुभगे ।
तरलतरनयने
　सुविकसितकुसुमम् ॥ १४ ॥

यस्यांजौ[1] सप्तमं रूपं
　समस्तेषु[2] च पञ्चमम् ।
पादेषु चामरः षष्ठः
　श्लोकं तं तु विनिर्दिशेत् ॥ १५ ॥

तच्छ्लोकाख्यं[3] वृत्तं यस्याजौ समपादे नियमेन सप्तमं रूपं भवति । आजिर्युद्धपर्यायः । असमेषु च पञ्चमम् । चशब्दात्सप्तममपि प्राज्ञैरायोजितम्[4] । अस्य बहुभेदद्वादशमेष्विति[5] न विरुद्धम् ॥ १५ ॥

रसपटहनूपुराणि
　कमलमुखि रूपभाञ्जि ।
निधनगतचारुकर्णौ
　बुधजनकृता[6] तु[7] गुर्वी ॥ १६ ॥

सा बुधजनेन तु कृता गुर्वी नाम । हे कमलमुखि यस्या रूपं भजन्ते तच्छीलानि रसादीनि भवन्ति । दु(तु): पादपूरणम् ॥ १६ ॥

रवपटहौ तनुसुभगे[8]
　शशिमुखि चामरसरसौ[9] ।
निधनगतं सुतनु करं
　त्वरितगतिर्भवति ततः ॥ १७ ॥

नूपुरशब्दौ तोमरयुक्तौ
　पश्यसि कान्ते रत्नरवौ च ।
यत्र सुरेभं नैधनसंस्थं
　सा किल भद्रे चम्पकमाला ॥ १८ ॥

चम्पकमालायाः सुरेभं[10] देवहस्तिनं आदिलघुमिति यावत् ॥ १८ ॥

ग्रैवेयकं रत्नपताकयुक्तं[11]
　पादं च मुग्धे करभोरु कान्ते ।

---

१ यस्यादौ AB. २ असमेषु Com. ३ तच्छूंकाख्यं AB. ४ रारोपितं AB. ५ बहुभेदादसमेष्विति ? ६ Between 3rd and 4th lines AB add शब्दांश्चमरयुग्मं. ७ तू AB. ८ तु सुभगे AB. ९ चामर० A. The text is unsatisfactory. तोमर would be [illegible], but [illegible] alone is wanted here. १० सुरभे B; सुरसे A. ११ पन्नगशत्रुयुक्तं Com.

यस्यां मणिं पश्यसि राजमानं
सैरावतान्ता कथितेन्द्रवज्रा ॥ १९ ॥

इन्द्रवज्रा नाम। ग्रैवेयकमाभरणं पन्नगशत्रुर्नाम्ना[1] गरुडेन युक्तं पश्यसि। करभो[2] मणिबन्धादारभ्य कनिष्ठाप्रान्तं यावत्करस्य बहिरवयवः तत्समावूरू यस्याः ॥ १९ ॥

उपेन्द्रवज्रा ध्वजरूपहारैः
सचामरैः शब्दनरेन्द्रकर्णैः।
शशाङ्कवक्त्रे सुखदा कवीनां
प्रभूतशास्त्रार्थविचक्षणानाम् ॥ २० ॥

या इन्द्रवज्रार्धसमानरूप-
मुपेन्द्रवज्रार्धमुपैति यस्याः।
मिश्रेति नाम्ना कविभिः प्रयुक्ता[3]
सैकत्रिपादेत्यपरे वदन्ति ॥ २१ ॥

सा कविभिर्मिश्रेति नाम्ना प्रयुक्ता रूपं च इन्द्रवज्रायाश्चरणेन सहोपेन्द्रवज्रायाश्चरणस्य रूपं भवति। वृत्तद्वयसांकर्यादियमुत्पद्यत इत्यर्थः। इयं मिश्रा। अन्ये[4] त्वेकत्रिपादा[5] इति वदन्ति ॥ २१ ॥

रत्ने कृत्वा चामरं चैव पश्चात्
कर्णं मुग्धे स्पर्शयुक्तं वरोरु।
भूयः कर्णं देवपीलुं च दद्या-
च्छन्दस्यैका(षा) शालिनी नाम वृत्तम् ॥ २२ ॥

शालिनी नाम। देवपीलुः सुरगजः ॥ २२ ॥

आदौ रत्नं शशिमुखि सुभगे
कर्णस्तस्माद्वरतनु ललिते।
रत्नं भूयः पटहरवयुतं
हस्तश्चान्ते भ्रमरविलसितम् ॥ २३ ॥

यत्र मणिं प्रथमं तु नियुक्तं
स्पर्शरसौ[6] कटकं च रसं च।
नूपुरभावयुतं यदि कर्णं
पश्यसि भामिनि दोधकवृत्तम् ॥ २४ ॥

वैनतेयपटहौ यदि भद्रे
वीक्षसे च कटकं रवयुक्तम्।

---

१ शत्रुनामो AB. २ भरतो मणिबद्धाचारस्य AB. ३ प्रणीतो श्लोकं added before प्रयुक्ता AB. ४ अन्या A; ५ त्वेकत्रपाद AB. ६ रकै AB.

वैजयन्तिचमरं च वरोरु
स्वागतेति कवयः प्रवदन्ति ॥ २५ ॥

स्वागता नाम । स्पर्शश्च हारश्च रसश्चेति द्वन्द्वैकवद्भावः ॥ २५ ॥

मुखे तु राजा चमरो विभूषणं
रवद्वयं चारु वरोरु दृश्यते ।
सपारिहार्यं च यदि ध्वजद्वयं
वदन्ति सभ्याः सुवसन्तमञ्जरीम् ॥ २६ ॥

वसन्तमञ्जरीं सभ्याः आर्या वदन्ति । पारिहार्यं कटकम् ॥ २६ ॥

रसनूपुरशब्दनरेन्द्ररवं
कटकं च वरोरु भवेत्तु यदा ।
यदि गन्धयुगं चमरं च भवेत्
पठ तोटकवृत्तमिदं सुभगे ॥ २७ ॥

रसरवौ कटकं पुरतः सदा
करयुगं च ततः सरवो मणिः ।
द्रुतविलम्बितहंसगति प्रिये
द्रुतविलम्बितवृत्तमिदं तदा ॥ २८ ॥

द्रुतविलम्बिता यासौ हंसस्य गतिः यस्याः सा प्रिया तस्या आमन्त्रणम् ॥ २८ ॥

द्वे रत्ने चरणरवौ च यत्र बाले
रूपं मौक्तिकसहितं ध्वजश्च मुग्धे ।
अन्तस्थः सुरपतिर्वारणश्च मत्तस्
तद्वृत्तं किल सुभगे मयूरपिच्छम् ॥ २९ ॥

मुखे रवश्चमरविभूषितो ध्वजस्
ततो रसो वरतनु शब्दयोजितः ।
विशांपतिं कुरु सुभगे सनूपुरं
सदागतिं वदति जनो ध्वजाङ्कितम् ॥ ३० ॥

विशांपतिः नृपतिः ॥ ३० ॥

पीनोन्नतस्तनभरानतगात्रयष्टे
सिंहोन्नतां प्रकथयामि तवाहमद्य ।

---

१ चमरं च ? Com. seems to read स्पर्शहारचमरं for वैजयन्तिचमरं in line 3. २ सख्या B. ३ सत्या AB.
४ सा प्रिया यस्यास्तस्या AB. ५ वाणि AB. ६ सुरपतिः वारणश्च AB.

वृत्तं प्रिये श्रवणपार्थिवपाणियुग्मं
देवेशवारणविरामनियुक्तपादम् ॥ ३१ ॥

रसपटहपताकाचामरैरुल्लसद्भिर्
विहगपतिनिबद्धैर्निर्मलैः पद्मरागैः ।
विरचितसुरनागैर्वीक्षसे[1] यत्र पादान्
भवति तदिह मुग्धे मालिनी नाम वृत्तम् ॥ ३२ ॥

नूपुरभावयुग्मसहितं[2] खगं सुपटहं
रत्नसुशोभितं वरतनु क्रमेण चमरम् ।
यत्र हि वीक्षसे नरपतिं सदा शशिमुखि
हस्तविरामकं प्रमुदिता भवेत्तु[3] सुभगे ॥ ३३ ॥

कर्णौ[4] भावो भुजगसहितो वैनतेयः सरत्नो
बाले रूपं मरकतमथो हारमिन्दीवराक्षि[5] ।
पादे यस्याः सुतनु नियतं दृश्यते चान्तसंस्थं
मन्दाक्रान्ता किल निगदिता पण्डितैः सा वरोरु ॥ ३४ ॥

सुरेन्द्रेभं कर्णं चरणपटहं चन्द्रवदने
प्प(प्रि)[ये पादे] यस्मिंल्ललितगमने पश्यसि पुनः ।
नियुक्तं केयूरं मरकतयुतं भावसहितं
ध्वजश्चान्ते यस्याः सुतनु कथिता सा शिखरिणी ॥ ३५ ॥

सा शिखरिणी नाम यस्याः पादे स्थाने सुरेन्द्रेभादीन्पश्यसि[6] । इभो हस्ती । केयूरमाभरणम् । ॥ ३५ ॥

पयोधररसाङ्गदैर्वसुमतीपतिं संयुतं
वरोरु रचयत्करं सुरगजं प्रकाशं प्रिये ।
नताङ्गि सततं यथा प्रचलितामलाभध्वजं
भवेच्च[7] पृथिवी पदैर्ललितकोमलैर्वाचकैः ॥ ३६ ॥

वसुमतीपतिः पार्थिवः । प्रचलिता अमला आभा यस्येति[8] ध्वजविशेषणम् ॥ ३६ ॥

द्विजगणरवं रत्ने कर्णस्तथाप्यपरो मणी
रवमणि पुनर्भावो बाले तथा विनतासुतः[9] ।

---

१ वीक्ष्यसे B. २ राव AB. ३ भवेत्सुभगे AB. ४ कर्णो AB. ५ हारिमि० AB. ६ सुरेन्द्रोभादीनस्यति AB. ७ भवेत् B. ८ सस्येति AB. ९ सुतैः AB. Immediately after this line both A and B give another reading for the same: रवकमलभावा बाले वेगवान्विनतासुतः.

भवति हरिणीवृत्तं भद्रे सदा ललिताक्षरं
बुधजनकृतं नित्यं श्रव्यं मृगाङ्कनिभानने ॥ ३७ ॥

द्विजगणरत्नरावचमरं च शशाङ्कमुखि
सर[1]सपताकभाववविलसत्कटकं च भवेत् ।
सुतनु विचित्रबन्धै[2]रचितं क[2]रपल्लवकं
मुनिजनसंस्तुतं प्रियतमे किल नर्कुटकम् ॥ ३८ ॥

पूर्वं माणिक्यं सुतनु कटकं रत्नमेकं सकर्णं[3]
भा[4]वं सस्पर्शं ललितगमने काव्यबन्धप्रयोगे ।
कुर्यात्स्वाकारं सुतनु नियतं हस्तमेकं वरोरु
तार्क्ष्यं मञ्जी[5]रं सुरपतिगजं कीर्तिता चन्द्रलेखा ॥ ३९ ॥

चन्द्रलेखायाः तार्क्ष्यो गरुडः । मञ्जीरं नूपुरम् ॥ ३९ ॥

द्वे रत्ने चरणं मृगाक्षि रसनायुक्तं च गन्धं[6] पुनः
केयूरं सरसं ध्वजं च विमलं यस्मिन्सदा वीक्षसे ।
हारं निर्मलपद्मरागसहितं देवेश्वरस्य द्विपं
तद्विद्यात्सपताकबन्धसुभगं शार्दूलविक्रीडितम् ॥ ४० ॥

रसना मेखला ॥ ४० ॥

मुखे रूपं चैकं मणिरपि भवेत्कर्णरत्ने नियुक्ते
ततो मञ्जीरं चेद्रसनियमितं शब्दरूपे पुनर्द्वौ ।
सुरेन्द्रेभं मत्तं [प्रिय]सखि ततो वीक्षसे सत्पताकं
सु[7]पर्णं मुक्ताढ्यं विरमनियतं चन्द्रकान्तेति गीता ॥ ४१ ॥

सुरद्वि[8]र्पः सुरगजः । सत्प[9]ताकमिति सुरेन्द्रेभविशेषणम् ॥ ४१ ॥ इतउत्तरं दीर्घसमासमपि प्रायेन(ण) विस्पष्टार्थम् ।

आदौ कर्णद्वयं स्यात्सुतनु ललितं वीक्षं[10]से रूपरत्ने
मञ्जीरं शब्दयुक्तं रसनियमितं रूपयुक्तं वरोरु ।
तस्मादै[11]रावणं [च] ध्वजमपि तथा वैनतेयं सरत्न-
मेतद्विद्याद्गुणाढ्ये बुधजनकृतं सुप्रभानाम वृत्तम् ॥ ४२ ॥
आदौ कर्णौ तु कान्ते रवमणिसहितं माणिक्यमपरं
भावस्पर्शस्वरूपं करमपि हि तथा मञ्जीरमतुलम् ।

---

१ सरसुपताक AB. २ बन्धुरचितं च पल्लवकं AB. ३ सकर्कं AB. ४ भाव स्वसनश्च ललित० AB. ५ मञ्जरी AB. ६ गन्धन्पुन: AB. ७ सुवर्णं AB. ८ Where could this word have occurred ? ९ सन्मालाक० AB. १० वीक्ष्यसे AB. ११ तस्मादैरावण० AB.

तस्मात्कुर्यात्तु[1] मुक्तं शशिमुखि पटहं रत्नं च निधने
एतद्वृत्तस्वरूपं बुधजनदयितं ख्यातं परमकम् ॥ ४३ ॥

मुक्तादिरत्नसहितौ पयोधर[2][रसौ] तथैव[3] सुभगे
माणिक्यरूपचरणं ध्वजं च सहसा निवेश्य सरवम् ।
ग्रैवेयकं नियमितं वरोरु रचयेत्सदा सपटहं
अन्ते च नूपुरयुतं शशाङ्कवदने शशाङ्कचरितम् ॥ ४४ ॥

मुक्तायुग्मं सरत्नं मुकुटमपि भवेद्वैजयन्ती सहारा
स्पर्शं रूपं सभावं सुतनु करतलं[4] वीक्षसे पङ्कजाक्षि ।
नागानां चाप्यमित्रं पुनरपि कटकं रूपकर्णैः[5]केयोगि
पादे तन्वङ्गि यस्याः प्रचरति[6] सुभगे स्रग्धरानाम वृत्तम् ॥ ४५ ॥

चामररूपयुग्मं[7]कटकं शशाङ्कवदने ध्वजं च सरवं
शब्दविभूपितं च नृपतिं समीक्ष्य दयिते पुनः सकटकम् ।
स्थापय शब्दभावचमरं च शब्दसहितं मणिं च विमलं
पन्नग[8]युक्तमन्तचरितं वरोरु सुभगे विशुद्धचरितम् ॥ ४६ ॥

द्विजगणरत्नरूपचमरं शशाङ्कवदने विमलश्च[9] रसो
[10]नरपतिरत्नयुक्तं[11]पटहो मृगाक्षि सुभगे यदि वै परतः ।
पुनरपि मेखलात्र पतिता नताङ्गि विरमे करपल्लवकौ
कविवरपन्नगेन्द्ररचिता सदा प्रियतमे हयलीलाङ्गी[12] ॥ ४७ ॥

चामरभावौ सललितगमने रत्नमतः शशिमुखि चरणश्च[13]
शब्दसमेतौ रसरवसहितौ हारमणी वरतनु कुलभद्रे[14] ।
भामिनि[15] हस्तं पुनरपि दयिते विप्रकरं यदि भवति[16] समेतं
तस्य तु रत्नं पुनरपि ललितं वृत्तमिदं वरतनु किल तन्वी ॥ ४८ ॥

चामररूपे शब्दसमेते पुनरपि वरतनु सललितचमरं
पश्यसि बाले रत्नमतो वै वरतनु शशिमुखि सुमधुरकटकम् ।
रूपसमुक्तं वै ध्वजरत्नं भवति [हि] मृदुघन[17]विपुलकुचयुगे
क्रौञ्चपदी [वै] त्रिद्विर्ज[18]युता विरचितकरतलनियमितविरमौ[19] ॥ ४९ ॥

---

१ कुर्यान्मुक्तां AB. २ पयोधरौ AB. ३ तवैव B. ४ करतं AB. ५ ०कर्णैकजोगि AB. ६ स्वचरति B. ७ ०युग्मं सकटकं AB.; ८ पन्नगैर्युक्त० B; पन्नगे युक्त० A. ९ विमलस्वरसः AB. १० Before this line both A and B read वरतनुर्पिंडितैः सुरचिता. ११ युक्तं पटहो AB. १२ हयलीलागतो B. १३ श्रवणश्च AB. १४ कुमभद्रे AB. १५ भावय भामिनि AB. १६ भवरि AB. १७ मृदुपान० AB. १८ द्वित्रिजयुक्ता AB. १९ विरामा AB.

आदौ बाले मुक्तायुग्मं विकसितकुवलयनयने भवेत्तु सचामरं
पश्चात्कर्णौ मुग्धे तस्मात् सुमुकुटरसरवपटहैस्तथाप्यपरो रवः[1][2]।
स्पर्शं भावं रत्नं दत्वा वरतनु शशिमुखि सुभगे मया तव कथ्यते
मुग्धे भूभृद्युक्तं[3] देयं पुनरपि नरपतिकटकं भुजंगविजृम्भितम् ॥ ५० ॥

इति वृत्तजातिसमुच्चये[4] कृतशिष्टशिष्टः पञ्चमो नियमः।

[इति पञ्चमो नियमः।]



१ रसः AB. २ रवं AB. ३ भूभृद्युक्तं चमररस पुनरपि॰ AB. ४ वृत्तजातिसमुच्चये इति AB.

# षष्ठो नियमः ।

इदानीं उक्तं 'कथयामि षट् प्रत्ययांस्तथा' इति तदाह—जो(जे) पिंगलेन इति ।

जे पिंगलेण भणिआ वासुइमंडव्वछंदआरेहिं ।
त[त्तो] थोवं वोच्छे छउओअरि छप्पआरेवि ॥ १ ॥

ये पिङ्गलेन भणिता वासुकिमाण्डव्यच्छन्दस्काराभ्याम् ।
ततः स्तोकं वक्ष्यामि छातोदरि षट्प्रकारैः ॥ १ ॥

स्पष्टम् ॥ १ ॥

के ते षट् प्रकारा इत्याह—पत्थारा इति ।

पत्थारे जे सव्वे णट्ठुद्दिट्ठं तहा अ लहुकिरिअं ।
संखं अद्धाणं विअ छउओअरि तं फुडं भणिमो ॥ २ ॥

प्रस्तारा ये सर्वे नष्टोद्दिष्टं तथैव लघुक्रियाम् ।
संख्यामध्वानं चैव छातोदरि तत्स्फुटं भणामः ॥ २ ॥

नष्टोद्दिष्टमित्येकवद्भावः । लघुक्रिया उपलक्षणम् । गुरुक्रिया[या] अपि विधानात् ॥ २ ॥

किमेभिः प्रत्ययैः कथितैः प्रयोजनमित्याह—उत्ताईणं इति ।

उत्ताइणं मज्झे वित्ता उण थोवआ मए भणिया ।
जुत्तीए पत्थारे छउओअरि तुज्झ वोच्छामि[3] ॥ ३ ॥

उक्तादीनां मध्ये वृत्तानि पुनः स्तोकानि मया भणितानि ।
युक्त्या प्रस्तारं छातोदरि तव वक्ष्यामः ॥ ३ ॥

उक्तसंज्ञो एकाक्षरस्य तदादिर्येषां तान्युक्तादीनि षड्विंशतिश्छन्दांसि तेषां मध्ये मया वृत्तानि स्तोकानि महाकविप्रबन्धसुप्रसिद्धानि अभिहितानि । इदानीं तु तानि युक्त्या कथयामि येनाल्पेनैव ग्रन्थेन निःशेषव्याप्तिर्घटते ॥ ३ ॥

आदौ तावत्तेषां नामान्याह—उत्तातह इति ।

उत्तं[6] अतिउत्तमज्झा पइट्ठसुपइट्ठ तह य गाइत्ती ।
उण्णी अणुट्ठुभ विहई पंती तिहुजगइअइजगई ॥ ४ ॥
सक्करि अइसक्करिया अट्ठी अइअट्ठि धिइअअइधिइऊ ।
किइ पाविसमभिउप्पर किई य छव्वीस छंदाइं ॥ ५ ॥

---

१ छप्पआरेहिं Com. २ वर्णातोदरि AB. ३ In the text vv. 2 and 3 are interchanged. I have followed the order of the Com. ४ उक्तसंज्ञकैक्षरस्य AB. ५ उक्ता ततोति AB. ६ Something corresponding to these stanzas (which I have practically reproduced from *Kavidarpana* ch. 3) seems to have been read by the Com. But the text does not contain them.

उक्तं तथात्युक्तं मध्यमसहिते प्रतिष्ठसुप्रतिष्ठे ।
गायत्र्युष्णिहौ तथानुष्टुप् बृहतीपङ्क्तित्रिष्टुप् जगत्यतिजगती ॥ ४ ॥

शक्वरी तथातिपूर्वा अष्टिः अत्यष्टिधृत्यतिधृती ।
कृतिप्रकृत्याकृतिर्विकृतिः संपर्यभिकृत्युत्कृतिसहितानि षड्विंशतिश्छन्दांसि ॥ ५ ॥

[1]एकाक्षरात्प्रभृति षड्विंशत्यक्षरं यावत् उक्तादीनि च्छन्दांसि भवन्ति । एकाक्षरस्योक्तं नाम द्व्यक्षरस्यात्युक्तं एवं यावत् षड्विंशत्यक्षरस्योत्कृतिरिति । त्रिष्टुप्जगत्यतिजगतीति समाहारद्वन्द्वः बृहत्यादिप्रकृत्यन्तस्तावत् । एवं संकृत्यादि । प्रथमं शक्वरीत्यस्यानन्तरमतिपूर्वं सैव पृथक् ॥ ५ ॥

एतेषामुद्देशपूर्वकं प्रस्तारानाह—सूई इति ।

सूईमेरुपडाआसमुद्दविवरीअजलहिपाआला ।
तह संवलिपत्थारो सहिओ विवरीयसंवलिणा ॥ ६ ॥

सूचिर्मेरुपताकासमुद्रविपरीतजलधिपातालाः ।
तथा शाल्मलिप्रस्तारः सहितो विपरीतशाल्मलिना ॥ ६ ॥

एतेषां यथोद्देशं लक्षणमाह—पमुहंते इति ।

पमुहंते एक्केक्कं तह विअ मज्झंमि एक्कमब्भहिअं ।
पमुहाओ आरहिअ वड्ढंते सव्वअंकाइं ॥ ७ ॥

प्रमुखेन्ते च एकैकं तथैव मध्य एकमभ्यधिकम् ।
प्रथमादारभ्य वर्धन्ते सर्वाङ्काः ॥ ७ ॥

सर्वस्यैव छन्दसि ऊर्ध्वक्रमेण प्रमुखे तथावदा(सा)ने एकमेकमङ्कान् स्थापयत । तथैव मध्येप्येकमेकं एककं च तत्राभ्यधिकं तदपेक्षं स्थापनीयम् । एतदुक्तं भवति—वृत्तस्य यावन्त्यक्षराणि तावन्त्येवैककान्येकाधिकानि विनिवेशनीयानि । यथा त्र्यक्षरस्य चत्वारि, चतुरक्षरस्य पञ्चेति । एवं यावत् षड्विंशत्यक्षरस्य सप्तविंशतिः । पश्चात्प्रमुखादारभ्य सर्वाङ्का वर्धन्ते ॥ ७ ॥

कथमित्याह—इक्केक्केणअ इति ।

एक्केक्केण भइज्जइअंते उअरिट्ठिओ तह च्चेअ ।
परिवाडीए मुंचह एक्केक्कं सूइपत्थारे ॥ ८ ॥

एकैकेन[2] भज्यते उपरिस्थितं तथैव ।
परिपाट्या मुञ्चै[3]कैकं सूँ[4]चिप्रस्तारे ॥ ८ ॥

आस्ते [?] मध्ये योङ्कः स परिपाट्या भज्[5]यते [उपरिस्थितं च] प्रत्येकं परिपाट्या मुच्यते । यथा त्र्यक्षरस्य चतुर्ष्वेकैकेषु प्रथमेनैकैकेन मध्यमनन्तरं भज्यते । तेनापि द्वितीयेन तृ[6]तीयं चतुर्थं तु [6]मुच्यते । उपरिस्थितेः । एवं प्रथममेककद्विकत्रिकैककाङ्कोपलक्षिता पङ्क्तिः संपद्यते । (१,२,३,१) ।

१ Words एकाक्षरात् to यावत् are repeated between छन्दांसि and भवन्ति AB. २ एकैकेनेन भिद्यते A; एकैकेन न भज्यते B. ३ पंचकक AB. ४ क्वचित् प्रस्तारो AB. ५ भिद्यते A. ६ चतुर्थतृतीयंतुमुत्पद्यते AB.

द्वितीये तु परिपाट्या उपरिवर्ती तृतीयो न भज्यते । तेन प्रथमेन द्वितीयस्यैव भेदो एकक[1]त्रिकत्रिकैक-काङ्कोपलक्षिता पङ्क्तिर्भवति । (१,३,३,१) । पश्चात्परिपाट्या द्वितीयमुपरिस्थितं भवति उपरिभव-स्थानद्वय(या ?)योगात् । तन्मोक्षाच्च तत्सं[2]रूपैवावस्थितिः ॥ ८ ॥

एतदेव स्पष्टीकरोति—**तं पिडिज्जउ णिउणं** इति ।

**तं पिंडिज्जउ[3] निउणं जाव अ बीओवि[4] आगओ ठाणो ।**

**तत्पिण्ड्यतां निपुणं यावद् द्वितीयमप्यागतं स्थानम् ।**

इति । विस्पष्टार्थमिदम् । एवं चतुरक्षरादीनां गतिरभूह्या । किमिहास्मिन् सूचिप्रस्तारे संपद्यत इत्याह—**पत्थार** इति ।

**पत्थारपाअगणणा लहुकिरिआ लंभए संखा ॥ ९ ॥**

**प्रस्तारपातगणना लघुक्रिया लभ्यते संख्या ॥ ९ ॥**

एतस्मिन् क्रियमाणे प्रथमं प्रस्तारपातगणना लभ्यन्ते[5] । पातनं पातः । प्रस्ताराणां पातः प्रस्तारपातः । वक्ष्यमाणन्यायेन अन्येषामप्यन्तःप्रवेश इत्यर्थः । 'एकम्मिवि पत्थारे पत्थारा [बहुअरा] विणिद्दिट्ठा' (६·१७) इति प्रस्तारपातगणना लभ्यते[5] । यथा सर्वत्रैव तावत्प्रथमे गुणने क्रियमाणे उपरिष्टात्फलं भवति । यथा त्र्यक्षरस्य चतुष्कमिति तत्प्रमाणात्प्रस्तारपातगणनां[8] वाच्या । यथा त्र्यक्षरस्य स्वेन सह प्रस्तारत्रयमापतति इति । तथा चतुरक्षरस्य चत्वार इति । एवं पञ्चाक्षराणां पञ्चप्रभृतयः उदाहार्याः । एतत्स[6]मुद्रप्रस्तारे प्रकटीकृतं स्वयमेव । पश्चाल्लघुक्रिया लभ्यते एकलघ्वादीनां वृत्तानां निश्चय इत्यर्थः । यथा कियँन्ति[7] त्रिलँघूनि वृत्तान्यस्मिन्संभवन्तीति चिन्तायां तस्मात्परिच्छेदः क्रियते यथैव(कं) त्रिलघ्विति । एवं द्वितीयाद् द्विलघुनिश्चयो यथा त्रीणि द्विलघूनीति । तद्वत्तृतीयादेक-लघुनिर्णयश्च यथा त्रीण्येवैकलघूनीति । चतुर्थादारम्य [एव]मेव प्रतिलोम(ग)त्या त्रिगुर्वादीनां कार्यम् । चतुरक्षरादीनां चानयैव दिशा गतिरूह्या । अन्यच्चास्मिन्सूचिप्रस्तारे क्रियमाणे संख्या लभ्यते । सर्वेषामेवैकत्र योजितानां गणनात् । तथा चोक्तमन्यैः—"एष्वेव पिण्डितेषु [च] संख्या प्रस्तारवि[9]रचिता भवति" (जयदेव. ८·११) तेन त्र्यक्षरस्याष्टौ प्रभेदाः कथनीयाः चतुरक्षरस्य च षोडश इति । यस्मात् त्र्यक्षरस्य एकक-त्रिक[त्रिक]एककानां एकत्रै[10] गणनादष्टा एवोत्पद्यन्ते ॥ ९ ॥

क्रमेण प्राप्तं मेरुप्रस्तारमाह—**इह कोट्ठआणं** इति ।

**इह[11] कोट्ठआण दोण्हं वड्ढइ हेट्ठट्ठिअं कमेणेअं[12] ।**
**पमुहंते[13] एक्केक्कं तदो अ दो तिण्णि चत्तारि ॥ १० ॥**

**इह कोष्ठकयोर्द्वयोर्वर्धते अधःस्थितं क्रमेणैव ।**
**प्रमुखान्ते[14] एकैकं ततश्च द्वौ त्रयश्चत्वारः ॥ १० ॥**

---

१ एककद्विकैकं चोपलक्षिता AB. २ तत्सरूपावस्थाया स्थितिः AB. ३ पिंडज्जह AB. ४ बीओइ AB. ५ Words from लभ्यते to गणना (both inclusive) are dropped in A. ६ समन AB. ७ कियंतत्र लघूनि AB. ८ गुणानां AB. ९ प्रस्तारविचारिता AB. १० एकत्रिगुणानां दष्टा AB. ११ इअ AB. १२ हट्ठट्ठिअं कमेण अ AB. १३ ददमुहंते AB. १४ प्रमुखान्तरैकैकं A; प्रमुखान्तरेकैकं B.

इहास्मिंश्छन्दसि द्वयोः कोष्ठकयोः स्थापितयोः पङ्क्तिक्रमेण पश्चादवस्थितानां पङ्क्तीनां क्रमेणैककमेकं वर्धते यावत् षड्विंशतितमं सप्तविंशतिः । कोष्ठकालीं स्थापयित्वा किंकर्तव्यमित्याह[1]— **पमुहंते** इति । प्रमुखान्त एकैकं ततश्च द्वे त्रीणि चत्वारि । सर्वस्य एव कोष्ठकपङ्क्तेरादौ तथावसाने एकैकमेकैकं विनिवेश्य ततो द्वित्रिचतुःप्रभृतीनि स्थापनीयानि ॥ १० ॥

कथमित्याह—**उपरिट्ठिअ** इति ।

**उअरिट्ठिअअंकेणं वड्ढइ हिट्ठट्ठिअं कमेणेअ ।**

**उपरिस्थिताङ्केन वर्धतेऽधःस्थितं[2] क्रमेणैव ।**

प्रत्येकं कोष्ठकस्याधः[3]स्थितस्य उपरि द्वौ कोष्ठकौ भवतः । तयोर्मिश्रीकृतयोर्यत्परिमाणं भवति तेनावस्थितेन क्रमेण पठ्यते । यथा प्रथमकोष्ठकद्वयस्याधः संस्थाप्यते तत्कोष्ठकत्रयम् । तस्य प्रथमे तावदेकं स्थितमेव । द्वितीयं तु उपरिस्थितकोष्ठकाङ्कद्वयमिश्रणाद्यत्परिमाणमुत्पद्यते द्विकं तद्विनिवेशनीयम् । तृतीये त्वेककं स्थितमेव । एवं द्वितीया पङ्क्तिः एककद्विकै[क]कोपलक्षिता संपद्यते ।

उदाहरणं

| १ | | १ | |
|---|---|---|---|
| १ | २ | १ | |

। अनन्तरं द्वि(तृ)तीयस्यां पङ्क्तौ यानि चत्वारि कोष्ठकानि तेषामाद्यन्तयोस्तावदेककं स्थितमेव । द्वितीयकोष्ठके उपरिभवकोष्ठकद्वयाङ्कात्परिमाणमेकं द्वौ चेति तृ(त्रि)कं स्थापनीयम् । तृतीये तथैव । चतुर्थे त्वेककस्यैव स्थितिः । एवं तत्र एकक[त्रिक]त्रिकैककोपलक्षिता पङ्क्तिर्जायते । उदाहरणं

१ १
१ २ १
१ ३ ३ १

। पश्चाच्चतुर्थे पङ्क्तिभागे पञ्चकोष्ठके तावदाद्यन्तयोर्निर्विवादमेक एव[4] । द्वितीये तूपरिष्टात्कोष्ठकद्वयान्मिश्रीकृत्य चतुष्कं स्थापनीयम् । तृतीये तथैवोपरिष्टात्षट्कमिति । चतुर्थतः चतुष्कं पञ्चमे त्वविवादः । एवं चतुर्थी पङ्क्तिरेकचतुष्क[षट्क चतुष्क]एककोपलक्षिता भवति । उदाहरणं

१ १
१ २ १
१ ३ ३ १
१ ४ ६ ४ १

।

एवं सर्वत्र कर्तव्यं यावत् षड्विंश[तित]मी पङ्क्तिरायातेति । तदा चैवमेकाकारे पङ्क्तिसमूहे स्थिते किं भवतीत्युच्यते—**मेरुम्मि** इति ।

**मेरुम्मि होइ[5] गणणा सूईएँ[6] एस अणुहरइ ॥ ११ ॥**

**मेरौ[7] भवति गणना[8] सूच्या एष अनुहरति ॥ ११ ॥**

अस्मिन्मेरौ क्रियमाणे गणंना[9] भवति प्रत्येकशः साकल्येन च सर्वच्छन्दसाम् । गणना रूप-

१ किं कर्तव्यतामित्याह AB. २ वर्धतेवस्थितं AB. ३ ध्वनितस्य AB. ४ धातावदान्यतोर्निर्विवादक एव AB. ५ मेरु सिहाइअ A; मेरुसिहोइ अ B. ६ सूइए AB. ७ मेरोस्त भवति AB. ८ गणनास्या एष AB. ९ गणगणा AB.

लक्षणं तेन प्रस्तारपातगणना लभ्यत एव । यस्मात्सूच्या एषोऽनुहरति सादृश्यं भजते । सूचीनां हि समुदायो मेरुः तेन सूच्यास्त्वैकस्य छन्दसो लघुक्रियादयो लभ्यन्ते मेरोस्तु सर्वेषामपि । न केवलं प्रस्तारपातगणनादि परीक्षा तु (च?) निवेश्य सर्वकोष्ठकेषु कार्या ॥ ११ ॥

अनयोरेव मन्दमतिबोधनार्थमाह—**सागर** इति ।

**साअरवण्णे अंका[1] दोच्चिअ[2] गरुआ अ मज्झिमट्ठाणे ।**
**समरे उण एक्कोच्चिअ मेरुम्मि तहेव सूईए[3] ॥ १२ ॥**

**सागरवर्णेऽङ्कौ द्वावेव गुरू मध्यमस्थाने ।**
**समरे पुनरेक एव मेरौ तथैव सूच्याम् ॥ १२ ॥**

सागरवर्णे विषमाक्षरे छन्दसि द्वावङ्कौ गुरू संपद्येते प्रस्तारद्वयेपि । यथा त्र्यक्षरे द्वौ त्रिकौ पञ्चाक्षरे द्वौ दशकाविति । समरे समाक्षरे पुनः एक एव यथा द्व्यक्षरे द्वौ चतुरक्षरे षडिति ॥ १२ ॥

पताकामाह—**मणिरव** इति ।

**मणिरवमालाआरो विउणेविउणेहि[4] वड्ढिओ कमसो ।**
**रइअव्वो पत्थारो णिहणद्धमणीरवद्धो[5] य ॥ १३ ॥**

**मणिरवमालाकारो द्विर्गुणद्विगुणैर्वर्धितः[6] क्रमशः[9] ।**
**स्थापयितव्यः प्रस्तारो निधनार्धमणीरवार्धश्च[7] ॥ १३ ॥**

प्रस्तारः स्थापयितव्यः । किंभूतः मणिरवैर्गुरुलघुभिरूर्ध्वक्रमेण मालाकारः स्रगाकृतिः । यथा हि माला सितासितादिभिः कुसुमैर्बध्यते तद्वदस्मिन्प्रस्तारेऽपि प्रथमं गुरुः पश्चाल्लघुः पुनर्गुरुः पुनरपि लघुरिति विनिवेश्यः । किंभूतः । क्रमशः परिपाट्या द्विगुणद्विगुणैर्वर्धितः द्विगुणीकृत्य वर्धयेदित्यर्थः । लुप्(ल्यब्)लोपेत्र पञ्चमी । यथा यथा क्रमेणाक्षराणां वृद्धिर्भवति उक्तात्युक्तमित्यादि मध्यमादिवशात्तथा तथा तस्माद् द्विगुणीकृताद्गुरूणां लघूनां चाग्रे द्विगुणा द्विगुणा वृद्धिः कार्या । यथा प्रथममेकाक्षरे एको गुरुरेकश्च लघुरिति प्रस्तारे स्थिते द्व्यक्षरावसरे तदेव द्विगुणीकार्यं यथा गुरुर्लघुरिति भवति । पश्चात् तस्माद् द्विगुणैरेव तदपेक्षं वर्धनीयम् । यथाग्रे द्वौ गुरू द्वौ लघू च संपद्येते । उदा० S S; I S; S I; I I । अनन्तरं त्र्यक्षरप्रसंगे द्व्यक्षरं द्विगुणीकार्यम् अष्टकृत्वः स्थापनीयम् । तस्माच्च गुरुलघूनां तद्वद् द्विर्गुणा स्थितिः कार्या । यतोऽग्रे गुरुचतुष्कं लघुचतुष्कं भवति । उदाहरणं S S S; I S S; S I S; I I S; S S I; I S I; S I I; I I I । एवं द्विगुणीकृतान् द्विगुणीकृतान् प्रस्तारान् कृत्वा द्विगुणद्विगुणवृद्ध्या च गुरुलघूनां सर्वेषु छन्दःसु क्रमेण स्थितिरभ्यूह्या । एतदेव स्पष्टीक्रियते । निर्धनार्धमणी रवार्धश्चेति । निधनेऽन्ते अर्धानि मणयो गुरवो यस्य तथा निर्धने[10] एवार्धानि[11] रवाणि यस्य स तथा । सर्वस्यैव च्छन्दसि पूर्वक्रमेण मालाकारस्य स्थापितस्यान्तेऽर्धानि गुरवो भवन्ति अर्धानि[12] च लघव एव इत्यर्थः ॥ १३ ॥

---

१ संका A; झंका B. २ दोवि गअआ अ मज्झिमट्ठाए AB. ३ मगम्मि तहा सूईअ AB. ४ हिविओणेसु वड्ढिमो AB. ५ णवद्धो अ AB. ६ द्विगुणत्रिगुणैववितक्रमसः AB. ७ रवधश्च AB. ८ त्रिगुणा AB. ९ सुक्रमेण repeated immediately AB. १० विधानवसरवीरर्धावश्चेति AB. ११ विधनेरेवार्धानि AB. १२ अमाणि चल एव इत्यर्थः AB.

अस्यैव विशेषान्तरमाह—बीअद्धेसु इति ।

बीअद्धेसु कहिंचिअ दिज्जइ फरिसोवि अंतिमो छउए ।
तेणेअं पत्थारे वित्ताणं कीरए गणणा ॥ १४ ॥

द्वितीयार्धेषु क्वापि दीयते स्पर्शोऽप्यन्तिमश्छाते ।
तेनेयं प्रस्तारे वृत्तानां क्रियते गणना ॥ १४ ॥

पताकाप्रस्ताराणां यानि द्वितीयार्धानि भवन्ति तेषां क्वचित्स्पर्शोऽप्यन्तिमो दीयते । यथा त्र्यक्षरस्याष्टप्रभेदस्यान्ते चत्वारो लघवो यथा च षोडशप्रभेदस्य चतुरक्षरस्यान्तेऽष्टाविति । क्वचित्स्पर्शोऽपीति भङ्ग्या विपरीतपताकां दर्शयति । तेन क्वचिद्द्वितीयार्धेषु गुरवोऽपि दीयन्त एव । तत्र विपरीतैः र[1]वमणिमालाकारः प्रस्तारः कार्यो यथा प्रथमे आदौ गुरूणां स्थितिस्तद्वदिह लघूनां कार्येत्यर्थः । ए[2]वं किं संपद्यत इत्युक्तं तेन प्रयोगेणास्मिन्प्रस्तारे वृ[3]त्तानां गणना क्रियते । तेनेहापि सहार्थे तृतीया । एतदुक्तं भवति । लक्षे(क्ष्ये)ण विना [न] लक्षणगतिर्निर्मला भवति यतः शिष्याणामतः पताकाप्रस्तारेण सह या गणना संख्या क्रियते सातिनिर्मला भवति लक्ष्य[4]लक्षणयुक्ता ॥ १४ ॥

समुद्रमाह—रअणा इति ।

रअणाइं जहिच्छाइ ट्ठविउं मु[5]द्धे ठवेह पत्थारं ।
ताव अ पिंडेअ [फुडं] फरिसा[6] सव्वे ठिआ जाव ॥ १५ ॥

रत्नानि यथेच्छया स्था[7]पयित्वा मुग्धे स्थापय प्रस्तारम् ।
तावच्च पिण्डय स्फुटं स्पर्शाः सर्वे स्थिता यावत् ॥ १५ ॥

अत्र व्यवहितपदसंगतिः । हे मुग्धे प्रस्तारं स्थापयेति । तावच्च तं स्फुटं पिण्डय यावत् सर्वलघून्[8]यायान्ति इति ॥ १५ ॥

सूत्रमात्रमेमत् । अस्यैव प्रपञ्चार्थमाह—पढम इति ।

पढमचमरस्स हिट्ठे फ[9]रिसं पुरओ जहाकमेणेअ ।
मग्गे जे परिसिट्ठा कडएहिं तेहिं पूरेहि ॥ १६ ॥

प्रथमचम[10]रस्याधः स्पर्शः पुरतो यथाक्रमेणैव ।
मार्गे ये परिशिष्टाः कटकैस्तान् पूरय ॥ १६ ॥

रत्नानि प्रथमं स्थापयित्वा कस्यचिच्छन्दसि पङ्क्तिक्रमेणानन्तरं तेषां यः प्रथमश्च[11]मरो गुरुस्तस्याधः स्पर्शो लघो(घु)र्विधेयः । तस्य पुरतोऽग्रे यथाक्रमेणैव प्रस्तारो विधेयः । यथैवोपरिपङ्क्तेर्गुरूणां लघूनामवस्थितिर्भवति तद्वदधो विनिवेशनीय इत्यर्थः । किंच । मार्गे पश्चाद्भागे ये परिशि[12]ष्टा वर्णा-

१ विपरीतरवि॰ AB. २ एवेक संपद्यते AB. ३ प्रवृत्तानां AB. ४ लक्षणक्षणयुक्ता AB. ५ मुद्धेद्धे AB. ६ फुरिसा सव्वट्ठिआ AB. ७ स्थापितं तु AB. ८ सर्वलघुनायात इति AB. ९ फुरिसं AB. १० चरमस्यार्धस्यस: AB. ११ श्चगुरुर्गुरुः AB. १२ परिशिष्या AB.

स्तान् कटकैर्गुरुभिः पूरय। यथा त्र्यक्षरस्य तृतीयपञ्चमसप्तमप्रभेदेषु प्रथमस्य गुरुत्रयरूपस्याध-[1]स्ताद्योऽसौ द्वितीयः प्रथमलघुः प्रभेदः 'पढमचमरस्स हिट्ठे'[2]त्यादिना परिकल्पितः[3] तस्याधस्तृतीये प्रभेदे द्वितीये प्रथमगुरोरधस्ताल्लघौ[4] कृते तस्यानन्तरं पुनः 'जहाकमेणे'[5]ति गुरौ विनिवेशिते त्र्यक्षरता संपद्यते। तदर्थमेतदुक्तं 'मग्गे जे परिसिट्ठा' इति। तेनास्मिन् तृतीये द्वितीये तृतीये लघुगुरू स्थापयित्वा यः प्रथमोऽक्षरः शिष्यते तत्र कटि(ट)को गुरुः कर्तव्यः। एवं मध्यलघुप्रभेद आयातः[6]। पञ्चमेऽप्येवं चतुर्थ-प्रभेदान्त्यस्य गुरोरधः परिकल्पितो यो लघुस्तस्य मार्गे यदक्षरद्वयं शिष्यते तत्र गुरुद्वयं स्थापनीयम्। अनेनान्तलघुप्रभेदो भवति॥ उदाहरणम्—SSS; ISS; SIS; IIS; SSI; ISI; SII; III॥ १६॥

किंच—

एकम्मिवि पत्थारे पत्थारा बहुअँरा विणिद्दिट्ठाँ[7]।
मग्गट्ठिआ वि तत्थवि[8] छउओअरि तुज्झ वोच्छामि॥ १७॥

एकस्मिन्नपि प्रस्तारे प्रस्तारा बहुतरा विनिर्दिष्टा।
मार्गस्थितास्तथापि छातोदरि तानहं वक्ष्यामि॥ १७॥

अस्मिन्समुद्रप्रस्तारे एकस्मिन्नपि बहुतराः प्रस्तारा विनिविष्टाः तांश्च मार्गेऽध्वनि स्थितान्[9] कथयामि॥ १७॥

तानाह—**अट्ठक्खर** इति।

अट्ठक्खरपत्थारे उत्ताईओ हुअंति सव्वे अ।
विह[ई]छंदंमि तहा पत्थारो नवविहो होइ॥ १८॥

एए सव्वे छंदा उक्किइछंदंमि होन्ति पत्थारे।
मइ भणिआ जुत्तीए लक्खिज्जं[10] बुहा पअत्तेण॥ १९॥

अष्टाक्षरप्रस्तारे उक्तादयो भवन्ति सर्वाण्येव।
बृहतीच्छन्दसि तथा प्रस्तारो नवविधो भवति॥ १८॥

एतानि सर्वाणि च्छन्दांस्युत्कृतिच्छन्दसि भवन्ति प्रस्तारे।
मया भणितानि युक्त्या लक्षय त्वं प्रयत्नेन॥ १९॥

अष्टाक्षरे एकाक्षरादयः सर्व एवान्तर्भवन्ति। एतच्च पताकायां दर्शितं ध्रुवम्। एवं बृहत्यां नवविधस्य प्रस्तारस्यान्तर्भावोऽन्वेष्यः। तथोत्कृतौ सर्वेषामेवेति मया भणितानि युक्त्या। सा च युक्तिर्भङ्ग्या[11] पताका[या]मेव दर्शिता। त्वं तु प्रयत्नेनाभियोगेन लक्षय जानीहि॥ १८–१९॥

इदानीम[12]तिदेशद्वारा मात्रानामाह—**एसोच्चिअ** इति।

---

१ गुरुत्रयस्यरूप० AB. २ इहह AB. ३ परिकल्पितस्यार्धस्तृतीये AB. ४ प्रथमगुरुरध० AB. ५ जाहाकोपेनेति AB. ६ आम्नाद्यः AB. ७ बहुअद्दा विणिदिट्ठा AB. ८ तहावि Com. ९ स्थितायां AB. १० लक्खिज्जसु तं पअत्तेण Com. ११ गम्या A; भम्या B. १२ सुनिदेसंद्वारो AB.

एसोच्चिअ पत्थारो मत्तावित्ताण साहिओ किंतु।
मत्ता जत्थ ण पूरइ फरिसं पढमं तहिं देहि ॥ २० ॥

एष एव प्रस्तारो मात्रावृत्तानां साधितः किंतु।
मात्रा यत्र न पूर्यते प्रथमं स्पर्शं तत्र देहि ॥ २० ॥

य एव वर्णवृत्तानां 'रअणाणि जहिच्छाए' (६·१५) इत्यादिना प्रस्तारोभिहितः स एव मात्रावृत्तानां भवति। इयांस्तु विशेषो यस्मिन्समुदाये मात्रा न पूर्यते तत्रैव प्रथमं स्पर्शं लघ्वक्षरं देहि। नान्यस्मिन्। मात्रा परिमाणम्। सा कदाचिन्न्यूनत्वेन पूर्यते कदाचिदाधिक्येन। तेन द्वयमपि परिहर्तुं प्रथमः स्पर्शो दीयते। यत्रैव न पूर्यते तत्र दीय[त] इति वचनाद्गाथायाः पञ्चमे प्रभेदे द्वितीयांशे प्रथमचर्मरस्याधः स्पर्शे कृते पुरतश्च गुरुषु स्थापितेषु मार्गे प्रथमगणस्थाने गुरुद्वयं कृत्वा मात्रापूरणस्पर्शो यदि वा गाथापेक्षया प्रथमो दीयते तत्र प्रथमः पञ्चमात्रो द्वितीयश्च त्रिमात्र आयातीति दोषः परिहृतः। यस्माद्गाथादीनि केवलमात्रावृत्तानि न भवन्ति तेषां दोष एव नास्ति। अंशकवृत्तानां तु यस्मिन्नेवांशके मात्रा न पूर्यते तस्मिन्नेव प्रथमे लादौ कृते दोषस्यावसर एव नास्ति। मात्रावृत्तप्रस्तारे यथा चतुर्मात्र एव प्रथमं गुरुद्वये कृते द्वितीयस्य प्रभेदस्य प्रथमं लघुं कृत्वानन्तरं पुरतो गुरौ कृते त्रिर्मात्रप्रसंगान्मात्राया न पूरणमतः स्पर्शे कृते द्वितीयचतुर्मात्रोऽनन्तरं तृतीये द्वितीयगणान्त्यस्य गुरोरधो लघौ कृते मात्रापरिपूरणार्थं कटके च विहिते त्रिमात्रस्यैवासरः। तत्परिपूरणाय यदि गुरुर्दीयते तत्पञ्चमात्रप्रसंगादपूरणमेव मात्रायाः। तेन तत्रापि पूरणार्थे लघुरेव कार्यः। एवं तत्र मध्यगुरुरायाति। अनेनैवादिगुरुसर्वलघू योज्यौ ॥ २० ॥

एवं सति यत्र मध्यगुरोः प्रतिषेधः तत्र का गतिरित्युच्यते—गाहा इति।

गाहाविसमगणाणं हेट्ठा अंतचमरस्स दे छउए।
मत्तापूरणफरिसं मज्झगअं पढमभणिअंमि ॥ २१ ॥

गाथाविषमगणानामधोऽन्तचमरस्य देहि छाते।
मात्रापूरणस्पर्शं मध्यगतं प्रथमभणितमपि ॥ २१ ॥

यद्युक्तं स्पर्शं तत्र प्रथमं देहीति तथापि गाथानां ये विषमगणास्तेषां प्रसंगे योसौ द्वितीयोन्तगुरुस्तस्याधः लघुं विनिवेश्य शेषमात्राद्वयं गुरुणा पूरयित्वा मात्रैका शिष्यते। तदर्थं प्रथमं प्राप्तमपि लघु मध्ये देयं गुरोर्लघोश्चान्तराल इत्यर्थः। तेनादिगुरोरवस्थानान्मध्यगुरोर्गतिर्विच्छिन्ना भवति ॥ २१ ॥

एतदेवोक्तम्—

एवं णरिंदरहिए विसमगणे कुणह गाहाण।

१ एक्कोच्चिअ AB. २ किंओ AB. ३ Both A & B add तत्रैव after पूर्यते. ४ रअणाणु जहिच्छाये AB. ५ तत्रैव AB. ६ चरमस्याधः AB. ७ परिवृतः AB. ८ द्वित्रिमात्र० B; द्विमात्र० A. ९ Both A & B repeat the words पूरणाय to प्रसंगाद० immediately after the latter word. १० दत्तापि AB. ११ मात्रापूरणस्यार्थे AB. १२ विषमगणानस्तेषां AB. १३ Both A and B add सर्वगणावसाना before लघुं. १४ रिच्छेन्ना AB.

एवं नरेन्द्रहितान्विषमगणान्कुरु गाथायाः ।

अत्र गाथा उपलक्षणम् । किंच—

**पढमलहू पत्थारो ठविअव्वो विसममत्ताण ॥ २२ ॥**

प्रथमलघुः प्रस्तारः स्थापयितव्यो विषममात्राणाम् ॥ २२ ॥

तिस्रः पञ्च सप्ताद्या विषमास्तासां प्रस्तारः प्रथमलघुः स्थापयितव्यः एतत्प्रायः पूर्वमेव स्थापितं 'मत्ता जत्थ ण पूरइ' (६·२०) इत्यादिना तथापि विस्पष्टार्थं पुनरुक्तम् ॥ २२ ॥

विपरीतसमुद्रमाह—**पढम** इति ।

**पढमरवाहो चमरं उअरि अ पुरओ जहाक्कमेणंपि ।**
**मग्गट्ठिआवि फरिसा विवरीअं जाण सलिलणिहिम् ॥ २३ ॥**

प्रथमरवाधश्चमरमुपरि च पुरतो यथाक्रमेणैव ।
मार्गस्थिताश्च स्पर्शा विपरीतं जानीहि सलिलनिधिम् ॥ २३ ॥

यथैव समुद्रप्रस्तारे गुरूणां प्रथमं स्थितिस्तद्वदिह लघूनां कार्या । किं च । मार्गे पश्चाद्भावे स्थिताः स्पर्शाः कर्तव्याः । यथा समुद्रे चतुरधः एवं भूभरणोपबृंहितं (?) विपरीतं सलिलनिधिं समुद्रं जानीहि । यथा त्र्यक्षरे प्रथमं लघुत्रयं स्थापनीयम् । पश्चाद्द्वितीये प्रथमपादवच्चामरं कार्यम् । पुरतश्च यथाक्रमेणैव लघुद्वये विहिते द्वितीयस्य आदिगुरुः प्रभेदो भवति योऽसौ समुद्रे सप्तमः । अनन्तरं तृतीये प्रभेदे उपरिस्थितद्वितीयलघ्वक्षरस्याधः स्थापिते गुरौ पुनश्च यथाक्रमेणैव विनिवेशिते लघौ य आद्यो वर्णः शिष्यते मार्गे तत्र स्पर्शः कार्यः । एवं सर्वत्रेति विपरीतसमुद्रप्रस्तारः ॥ २३ ॥

पातालमाह—

**संखं ठवेह पढमं पाअंकेणावि गुणह तं हेट्ठे ।**
**तस्थवि अद्धं घेत्तुं तिहि ठाणेहिं विभज्जेज्ज ॥ २४ ॥**

संख्यां स्थापय प्रथमं पादाङ्केनापि गुणय तामधः ।
तस्याप्यर्धं गृहीत्वा त्रिभिः स्थानैर्विभज्यताम् ॥ २४ ॥

सर्वस्यैव च्छन्दसो या वृत्तानां संख्या यथा त्र्यक्षरस्याष्टौ तां प्रथमं स्थापय । पश्चात्पादाङ्केनाधस्तामेव गुणय । पादाङ्कः पादपरिमाणम् । इह पादाङ्कस्त्रिकम् । तेनाष्टानां गुणनाच्चतुर्विंशतिर्भवति । ततोऽष्टौ चतुर्विंशतिश्चेति स्थानद्वयं संपद्यते । अनन्तरं तस्यापि चतुर्विंशतेरर्धो द्वादश गृहीत्वा त्रिभिः स्थानैर्विभज्यताम् ॥ २४ ॥

**एए पंच पएंसा मज्झिमअं तिउणअं करेज्ज [इ]ह ।**
**संखा वण्णा मत्ता लहुगुरुआ होन्ति पाआले ॥ २५ ॥**

---

१ नरेन्द्ररचितां AB. २ प्रथमनवप्रहारः AB. ३ पढमवाराओ AB. ४ प्रथमरवदेधचमरपुरतो AB. ५ प्रथमरवस्याधः चामरं ? ६ तस्सवि Com. ७ गणेहिं AB. ८ तृप्तिः A; तृभिः B. ९ पभेआ Com.

[एते पञ्च प्रदेशा[1] मध्यमं त्रिगुणं कुरुतेह ।
संख्या वर्णा मात्रा लघवो गुरवो भवन्ति पाताले ॥ २५ ॥]

एवमनेन प्रकारेण पञ्च प्रभेदा भवन्ति । तद्यथा अष्टौ चतुर्विंशतिर्द्वादश[द्वादश द्वादश] चेति । तेषां च यन्मध्यम[2] स्थानं तत् त्रिगुणं कुरु । द्वादश त्रिभिर्गुणयित्वा षट्त्रिंशद्भवन्ति । एवं कृते संख्यादीनां पञ्चानां लाभो भवति[2] ॥ उदाहरणम् ८, २४, ३६, १२, १२ । एवमस्मात् प्रभेदा अष्टौ त्र्यक्षरस्य, सर्वप्रभेदेषु च वर्णाश्चतुर्विंशतिर्मात्राः षट्त्रिंशत्, लघवो द्वादश, गुरवश्च द्वादश एवेति पातालाल्लभ्यते ॥ २५ ॥

शाल्मलिमाह—**ठविऊण** इति ।

**ठविऊण तिण्णि तीस अ सत्तावीस अ कमेण एएण ।**
**वड्ढंति दोण्णि एक्क व ल्हसइ अ एक्कं कमेणेअ ॥ २६ ॥**
**दोवड्ढि [इक्कहाणी] एक्केक्कं वड्ढए[3] तहा मज्झे[3] ।**
**तावँ[4] [समप्पइ एअं दोच्चिअ णिहणे ठिआ जाव ।**
**इअ संवलिपत्थारो] मत्ताविंत्ताण काअव्वो[4] ॥ २७ ॥**
**छव्वीसं गाहाणं पत्थारो संवली मए भणिओ ।**

स्थापयित्वा त्रीणि त्रिंशच्च सप्तविंशतिं च क्रमेणानेन ।
वर्धेते[5] द्वावेको ह्रसते चैकः क्रमेणैव[6] ॥ २६ ॥
द्विवृद्धिरेकहानिरेकैको दीयते तथान्तः ।
तावत्समर्प्यत एतद् द्वावेव निधने स्थितौ यावत् ॥
इति शाल्मलिप्रस्तारो मात्रावृत्तानां कर्तव्यः ॥ २७ ॥
षड्विंशतेर्गाथानां प्रस्तारः शाल्मलिर्मया भणितः ।

इत्यनेन प्रकारेण मया गाथानां षड्विंशतेर्लक्ष्म्याद्यानां शाल्मल्याख्यः प्रस्तारो भणितः । त्रीणि त्रिंशत् सप्तत्रिंशतिश्चेति स्थानत्रये क्रमेणानेन अनया परिपाट्या स्थापिते किं कर्तव्यमित्याह—**वड्ढंति** इति । तेन त्रिषु द्वौ वर्धेते त्रिंशत्[7]येक इति । सप्तविंशतावेकं तु ह्रसते[8] लुप्यते । एवमेकस्मिन् स्थाने द्वाभ्यां वृद्धिर्भवति तथा तृतीयेऽप्येकेन हानिर्भवति । अन्तश्च[9] मध्यस्थाने एकैकं वर्धते । अन्तःशब्दो मध्यपर्यायः । एवं कियद्यावत् क्रियत इत्याह—तावदेव तत् समर्प्यते ह्रास्यते यावन्निधनेऽवसाने द्वावेव द्वौ स्थितौ भवतः ॥ एतदेवोपसंहरति—इति शाल्मलिप्रस्तार इति ॥२६॥२७॥

किमर्थमित्याह—**लहुआणं** इति ।

---

१ प्रभेदाः ? २ यन्यन्यनं B. All words from तेषां च यत् to लाभो भवति (both included) are dropped in A. ३ दिज्जए तहा अंतो Com. ४ ताव सताविंत्ताणं काअव्वो होइ पत्थरो AB. ५ च वध्यते AB. ३ क्रमो नैव B; मानैव A. ७ त्रिंशत्स्वेति AB. ८ ह्रते. ९ अन्त्यश्च AB.

**लहुआणं वण्णाणं आणअणे तहव्वि(वि)अ गुरूणं ॥ २८ ॥**

**लघूनां[1] वर्णानामानयने तथैव गुरूणाम् ॥ २८ ॥**

लघ्वादीनामानयने यथा त्रयो लघवस्त्रिंशद्वर्णाः सप्तविंशतिर्गुरव इति प्रथमस्याम्[2]। एवं द्वितियस्यामधो (?) द्वितीयस्थानात् यथा पञ्च लघवो वर्णा एकत्रिंशत् षड्विंशतिश्च गुरव इति। तृतीयस्यां तृतीयात्स्थानात् यथा सप्त लघवो वर्णा द्वात्रिंशत् पञ्चविंशतिश्च गुरव इति। एवं सर्वत्र कर्तव्यम्। उदाहरणम्—३, ३०, २७। ५, ३१, २६। ७, ३२, २५। गाथा[ना]मित्युपलक्षणं प्राधान्यात्। तेन स्कन्धकादीनामयमेवोपायः। स्कन्धके यथा प्रथमं चत्वारो[3] द्वितीयं चतुस्त्रिंशत् तृतीये त्रिंशत्। अत्रैव तथापि तथैव वृद्धिर्हानी[4]। न केवलं स्कन्धादीनां यावत्सुमनःप्रभृतीनां द्विपदीनामप्यन्येषां च। यथा सुमनसः प्रथममष्टौ ततो द्वात्रिंशच्चतुर्विंशति[श्चेति] स्थानत्रये स्थापिते तथैव वृद्धिक्षयौ विधेयौ। अत्र तावत्समर्प्यते यावच्चत्वारोन्ते शिष्यन्ते[5]। एवं सति प्रथमभेदेऽष्टौ लघवो वर्णा द्वात्रिंशत् चतुर्विंशतिश्च गुरव इति कथ्यन्ते ॥ २८ ॥

तस्मात्प्रत्येकं पाते(?) [ती]पंणासं इति।

**तीपण्णासं पंचावण्णा दोच्चिअ कमेण ठविऊण।**
**दोहाणि एक्कवड्ढी एक्केक्कं हीरए तहा मज्झे।**
**विवरीअसंवलीए होइ विहाणं इमं छउए ॥ २९ ॥**

**त्रिपञ्चाशत्पञ्चपञ्चाशत् द्वौ चैव क्रमेण स्थापयित्वा[6]।**
**द्विहानि[रेक]वृद्धिरेकैकं ह्रियते तथा [मध्ये]।**
**विपरीतशाल्मलेर्भवति विधानमिदं छाते ॥ २९ ॥**

हे छाते तन्वि प्रथमे त्रिपञ्चाशत् द्वितीये पञ्चपञ्चाशत् तृतीये च द्वौ इति क्रमेण स्थापयित्वा तथैव क्रमेण द्वाभ्यामेकेन च हानिर्योज्या। एकेन च तृतीये वृद्धिः। एवं तावत्कार्यं यावच्छाल्मलि[7]प्रभेदो नाम। अत्रापि स्कन्धकादीनां अयं[8] कर्तव्यः ॥ २९ ॥

नष्टोद्दिष्टमाह—**एत्तिअमित्ते** इति।

**एतिअंमेत्ते[9] अंके कअरो वेत्तित्ति णट्ठअं होइ।**
**एअं जाणह वित्तं कअम्मि ठाणम्मि उद्दिट्ठं ॥ ३० ॥**

**एतावत्यङ्के कतरद्वृत्तमिति नष्टं भवति।**
**तज्जानीहि वृत्तं कतमे स्थान इत्युद्दिष्टम् ॥ ३० ॥**

प्रथमैकादिकेऽङ्के स्थापिते यत्कश्चित्पृच्छत्येतावत्यङ्के सति कतरद्वृत्तं भवति कीदृक्स्वरूपं गुरुलघुरिति नष्टसामान्यलक्षणम्। यच्च वृत्तं प्रस्तीर्य कश्चित्पृच्छति एतद्वृत्तं जानीहि तावत्कतमे[10] स्थाने द्वितीय आहोस्वित्तृतीय उत्तान्यस्मिन्क्वचिदित्युद्दिष्टलक्षणम् ॥ ३० ॥

---

१ बहूनां AB. २ प्रथमः स्यात् AB. ३ चक्षरो AB. ४ वृद्धहारी AB. ५ सिष्टंते AB. ६ स्थापयेत् द्वौदेवक्रमेणानेन AB. ७ शाल्मरेः प्रथमः प्रभेदो नाम ? ८ भतष्कर्तव्यः AB. ९ एत्तेअमेत्ते AB. १० कथमेव AB.

अनयोर्विस्तारमाह—**विसमंकेसु** इति ।

**विसमंकेसु अ चमरं समेसु फरिसं ठवेह वित्ताणं ।**
**अद्धद्धं ओसक्कइ णट्ठंके सव्वकडआइं ॥ ३१ ॥**

**जत्थ अ ण देइ भाअं एक्कं दाऊण तत्थ पिंडेह ।**
**भाए दिण्णे अ फुडं मयच्छि णट्ठं विआणेहि ॥ ३२ ॥**

विषमाङ्केषु च चामरं समेषु स्पर्शं स्थापय वृत्तानाम् ।
अर्धमर्धमवष्वष्कते नष्टाङ्के सर्वकटकानि ॥ ३१ ॥

यत्र च न ददाति भागमेकं दत्वा तत्र पिण्डय ।
भागे दत्ते च स्फुटं मृगाक्षि नष्टं विजानीहि ॥ ३२ ॥

यमेवाङ्कमुद्दिश्य प्रष्टा पृच्छति स यदि विषमो भवति तदार्धमसमर्घ्य चमरं[३] स्थापय । समश्चेत्त-स्यार्धोपसर्पणे स्पर्शमिति । नष्टाङ्के सति सर्वकटकानि सर्वे गुरवः स्थाप्यन्ते । नष्टत्वमङ्कस्य एकक-प्राप्तिः । ननु[४] च विषमाङ्कात्कथमर्धलाभः । एतदर्थेनैवोक्तं यत्र प्राक्रियमाणं भागं न प्रयच्छति विषमाङ्के त्रिपञ्चसप्तादिस्तत्रैकं दत्वार्धापहारो विधेयः ॥ ३१ ॥ ३२ ॥

कियदवध्यन्ते[५] क्रियत इत्याह—**अद्धद्धं** इति ।

**अद्धद्धं ओसक्कइ बहुसो वाहाइ जाव अ समत्तं ।**
**जं[६] णिहणे तं[६] वित्तं णट्ठंमि अ पँच्चअं[७] एयं ॥ ३३ ॥**

अर्धमर्धमवर्ष्वष्कते बहुशो भांगा [द्यावच्च समाप्तम् ।
यन्निधने तद्वृत्तं नष्टे च प्रत्यय एषः] ॥ ३३ ॥

यावत्तद्वृत्तं समाप्तमिति । तस्मिन्समाप्ते यन्निधनेऽन्ते रूपं दृश्यते तद्वृत्तं दर्शनीयम् । इत्येत-न्नष्टाङ्के प्रत्ययमिति यथा—षडक्षरस्य सप्तमः प्रभेदः कीदृश इति प्रश्ने तदेव स्थापनीयम् । पश्चात् ‘ जत्थ अ ण देइ भाअं ’ इति सैकं[८] कृत्वा अर्धं[९][१०] चापहृत्य ‘ विसमंकेसु ’इति स्थानिवद्भावाद्गुरुर्निवेश्यः । अनन्तरं तदर्धस्य चतुष्कस्यार्धे हृते ‘ समेसु फरिसं ’ इति लघुं दत्वा पश्चात्तस्यापर्यर्धे[११][१२] हृते लघोः एव स्थापनम् । एवमक्षरत्रय आदिगुरवोयेते (?) । तच्छिष्टमेककं तदेवार्धग्रहणाय सैकं कृत्वार्धं च गृहीत्वा गुरुमेव स्थापयेत् । एवं चतुर्थमक्षरं लघु लब्धं भवति । पुनरपि तस्य सैकीकरणार्धापहाराभ्यां[१३] गुर्व-क्षरस्यैव लाभः पञ्चमस्य । षष्ठस्य गुरोस्तथैव कर्तव्यमत एवोक्तम्—‘ अद्धद्धं ओसक्कइ बहुसो[१४] वाहाई जाव अ समत्तं ’ इति । एवं गुरु-लघुद्वय-गुरुत्रयरूपं षडक्षरस्य सप्तमं दर्शयेत् । उदा० SII SSS ॥ ३३ ॥

उद्दिष्टमाह—**अंतं फरिसं**[१५] इति ।

---

१ मषष्ठकांते AB. २ द्वाद्दश AB. ३ र्ध्वमनं AB. ४ नरुद्दे च AB. ५ कियदववध्यन्ते A; कियदवबध्येत B. ६ जाणहणित्तं AB. ७ पच्चमअं AB. ८ अष्टकृत्ते AB. ९ वानां AB. १० मैकं AB. ११ सं A. १२ तदस्माप्यरे ह्यते B; तदस्यापरे हृते A. १३ स्यैककरणापापहाराभ्यां AB. १४ बहुलो बारा AB. १५ हरिदाउ AB.

अतं फरिसं घेत्तुं विउणा विउणेसु [सु]वणु वण्णेसु ।
एक्केक्कं चमरेसुं मुंचह उद्दिट्ठए छउए ॥ ३४ ॥

अन्तं स्पर्शं गृहीत्वा द्विगुणाद्द्विगुणेषु सुतनु वर्णेषु ।
एकैकं चमरेषु मुञ्चोद्दिष्टे छाते ॥ ३४ ॥

यत्प्रष्ट्रा वृत्तमुद्दिष्टं तस्मिन्प्रसृते यदन्तिमं स्पर्शं भवति तद्द्विगुणीकार्यम् । पश्चात्तस्माच्च द्विगुणीकृतादारभ्यान्येषां प्रत्येकमधो द्विगुणीकार्यं तद्द्विकम् । तत्र च ये चामरा भवन्ति तेष्वेकमधस्ताद्द्विगुणीकृतेषु त्याज्यं अस्मिन्नुद्दिष्टविधाने ॥ ३४ ॥

[ एआइ इति । ]

एआइ पिंडणाए जं अंकं होइ अंतिमं मुद्धे ।
तं कहिअव्वं वित्तं उद्दिट्ठे पच्चअं एअं ॥ ३५ ॥

एतया पिण्डनिर्क्रया योऽङ्को भवत्यन्तिमश्छाते ।
तत्कथयितव्यं वृत्तमुद्दिष्टे प्रत्ययोऽयम् ॥ ३५ ॥

यथा षडक्षरस्यैव सप्तमे प्रभेदे पृष्टे प्रथमं तत्प्रस्तारो विधेयः । तस्य योऽयं तृतीयोन्त्यो लघुः स द्विगुणीकार्यः । पश्चात्प्रातिलोम्येन द्वितीयस्याक्षरस्याधस्तस्मिन्नपि द्विगुणीकृते चतुष्कं भवति । अनन्तरं प्रातिलोम्येनैव प्रथमाक्षरस्थाने तस्मिन्नपि द्विगुणीकृते अष्टौ ये भवन्ति तेषु 'एक्केक्कं चमरेसुं' इत्येकस्मिन् हृते सप्त ये शिष्यन्ते तत् परिमाणं वाच्यं यथा सप्तमोयं प्रभेद इति ।

उदा० SII SSS ॥ ३५ ॥
(७ ४ २)

मात्रावृत्तजातीनां नष्टोद्दिष्टमाह—**जे पढमत्था** इति ।

जे पढमत्था वण्णा मत्तावित्ताण णिअमिआ होंति ।
ते दिज्जंते णट्ठें, उद्दिट्ठे पुंसह तेच्चेअं ॥ ३६ ॥

ये प्रथमस्था वर्णा मात्रावृत्तानां नियमिता भवन्ति ।
ते दीयन्ते नष्टे उद्दिष्टे अपमार्जय तानेवँ ॥ ३६ ॥

मात्रावृत्तजातीनां ये प्रथमस्था वर्णा नियमिता भवन्ति यथा गाथानां त्रिंशत् स्कन्धकानां च चतुस्त्रिंशत् इत्येवमादयः ते नष्टे दीयन्ते उद्दिष्टे तत एव लुप्यन्ते ॥ ३६ ॥

एतस्यैव विस्तारमाह—**मत्तावित्ताण** इति ।

मत्तावित्ताण सआ पुच्छिज्जन्तो अ वण्णपरिमाणं ।
पुट्ठाउ पुंसह एक्कं मूलं दाऊण जाणेज्ज ॥ ३७ ॥

---

१ फरिसा घित्तं AB. २ पंचोद्दिष्टे AB. ३ त्रिगुणा AB. ४ Both AB add गुणनिकया after this word. ५ योन्यङ्को AB. ६ एकैकं मरेस्विति AB. ७ Portion from मात्रावृत्तजातीनां नष्टो० to तानेव is dropped in A. ८ णट्ठ उद्दिट्ठे AB. ९ ते सेसेअ AB. १० नष्टा AB. ११ पल्हओ AB. १२ Both AB add उद्दिट्ठं पुरओ नट्ठं (from v. 39 below) before दाऊण. १३ Com. seems to read पुट्ठाउ पुंछिएक्कं मूलं दाऊण जाणेहि for the line.

मात्रावृत्तानां सदा पृच्छ्यमानाद् वर्णपरिमाणम्।
पृष्टोदवमृज्यैकं मूलं दत्वा जानीहि ॥ ३७ ॥

नष्टविधौ य एव प्रश्नमारोपिते(ता) भवन्त्यङ्कास्तस्मादेवैकमपमृज्य मूलाङ्कं हि दत्वा जानीहि बुध्यस्व। यथा पञ्चमी गाथा [क]त्यक्षरेति प्रश्ने पञ्चकस्य स्थापितस्यैकमवलुप्य चत्वारः मूलमात्रपरिमाणं त्रिंशत् [च एवं] चतुस्त्रिंशत्सु स्थितेषु[3] तत्परिमाणा गाथा वाच्या। यथा चतुस्त्रिंशदक्षरा गाथेयमिति ॥ ३७ ॥

उद्दिष्टस्याह—**काऊण** इति।

**काऊण वण्णगणणं एक्कं दाऊण पुसह मूलंपि।**
**जं सेसं तं जाणह मत्तावित्ताण उद्दिट्ठे ॥ ३८ ॥**

कृत्वा वर्णगणनां एकं दत्वा अपमार्जय मूलमिति।
यच्छेषं तज्जानीहि मात्रावृत्तानामुद्दिष्टे ॥ ३८ ॥

उद्दिष्टे विधौ प्रथमं वर्णानां गणनां कृत्वा एकं देयं यस्मिन्दत्ते मूलमवलुप्य यच्छेषं [तत्]परिमाणं वाच्यम्। यथा चतुस्त्रिंशदक्षरा गाथा सा किं द्वितीया ततः तृतीया हन्तान्या काचिदिति प्रश्ने तेषां वर्णानां गणनां कृत्वा एकं च तत्राधिकं कृत्वा पञ्चत्रिंशदङ्के स्थिते मूलभूतमवलुप्यते। यच्छेषं तत्र[6] पञ्चकं तदेवो[7]द्दिष्टे ज्ञातव्यं यथा पञ्चमी गाथाजातिरियमिति। अन्येषामप्ययमेवोपायः ॥ ३८ ॥

इदानीं गाथादीनामंशकवृत्तानां ये कोटिशो भेदाः सन्ति तेषां नष्टोद्दिष्टविध्यर्थमाह—**सविअप्प** इति।

**सविअप्पउ[णं] काऊण मुंचं हेट्ठाउ अंसए सेसे।**
**पडिलोमं उद्दिट्ठं पुरओ णट्ठं विआणेहि[9] ॥ ३९ ॥**

स्वविकल्पगुणं कृत्वा मुञ्चाधस्तादंशकं शेषम्।
प्रतिलोममुद्दिष्टे पुरतो नष्टं विजानीहि ॥ ३९ ॥

स्वश्चासौ विकल्पः स्वविकल्पः तेन गुणनं स्वविकल्पगुणनम्। प्रत्येकमंशकस्य यः स्व आत्मीयो भेदो विकल्पते यथा गाथायाः प्रथमस्य चत्वारोऽनन्तरस्य पञ्चेति। तेन प्रतिलोममधःप्रभृत्यन्येषां विकल्पानां गुणनं कलनं संख्यानं कुर्यात्[10]। कृत्वा चाधस्तस्यैवांशस्य येंऽशाः संभवन्ति तान्मुञ्च त्यज अस्मिन्नुद्दिष्टविधौ। नष्टं तु पुरतोऽस्मादनन्तरं ज्ञास्यसि। यथा केनचिदस्यामेवो[11]द्दिष्टायां यथा कतिथीयं [12]गजैरिति। तत्रादौ प्रस्तरणीयेयमनन्तरं च प्रथमद्वितीयादेः स्वं स्वं विकल्पं कल्पयेदधः। यथा प्रथमे मध्यगुर्वभावाच्चत्वारो द्वितीये पञ्च तृतीये तथैव चत्वारः चतुर्थे [13]पञ्चेति यावदुपान्त्यं चतुर्विकल्पमायातमिति। उदा०

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| IIS | IIS | SS | ISI | SS | ISI | SS | S | IIS | SS | SS |
| ४ | ५ | ४ | ५ | ४ | २ | ४ | १ | ४ | ५ | ४ |

१ प्रस्तादव० A.; प्रस्तावादव० B. २ मूलबन्धं विजानीहि AB. ३ स्थिते पुनः परि० AB. ४ एवं च AB. ५ कृलकृसतमव० AB. ६ तत्रतत्र AB. ७ तथैव AB. ८ मुंचह AB. ९ विआणिहिसि Com. १० कुर्यात्तः A; कुर्यादन्तः B. ११ एकेद्दि० AB. १२ गाथा इति ? १३ पंचमपंचेति AB.

| IIS | SS | I | SII | S | ५ | ४ | १ | ४ | १ | अनेक क्रमेण संस्थाप्य अन्तिमेन षोडशस्य मणेरधःस्थितेन एककेन प्रतिलोमं पञ्चदशाधःस्थितं चतुष्कं गुणयेत् । एकेन एतद्गुणितं तत्स्वरूपमेव भवति (१५)। अनन्त[रं][1] आदिगुरु[2]स्वरूपस्य शेषं विप्रांश एको यो भवति तस्मिन्मुक्ते त्रिकं [सं]पद्यते । [तेन] पश्चाच्चतुर्दशाधःस्थितस्यैककस्य गुण[3]नात् [त्रयमेव भवति (१४)। शेषाभावात् त्रयोदशाधःस्थितस्य चतुष्कस्य गुणनेन द्वादश संपद्यन्ते । ततश्च शेषाणां करचरणविप्राणां त्यागात् नव जायन्ते (१३)। तैर्द्वादशाधःस्थितस्य पञ्चकस्य गुणनात् पञ्चचत्वारिंशद्भवन्ति] त्रयाणां नरेन्द्रचरणविप्राणां शेषाणां [च] त्यागात् द्वाचत्वारिंशत् शिष्यन्ते (१२)। तैरपि एकादशाधःस्थितस्य चतुष्कस्य गुणने[4] त्रयाणां च शेषाणां करचरणविप्राणां मोक्षात्पञ्चषष्ट्यधिकस्य शतस्यावस्थानम् (११)। ततोऽपि तेन दशमाधःस्थितस्य पञ्चकस्य कलनाच्चतुर्णामन्तगुरुमध्यगुरुआदिगुरुसर्वलघूनां त्यागादेकविंशत्यधिकानि अष्टौ शतानि जायन्ते (१०)। तैश्च नवमाधोवर्तिनः चतुष्कस्य[5] गुणनात् द्वयत्यागाच्च सहस्रत्रयं द्व्यशीत्यधिकं च शतद्वयं संपद्यते (९)। एवं द्वितीयेऽर्धे निर्णीते अष्टमे चैकके ते[न] तत्स्वरूप एव गुणिते शेषस्याभावः (८)। पश्चात्सप्तमस्य द्विगुरोरधश्चतुर्षु गुणितेषु त्रिषु च मु[6]क्तेषु त्रयोदशसहस्राणि शतं च पञ्च[7]विंशत्यधिकं भवति (७)। तेनापि षष्ठस्य मध्यगुरोरधो द्वयोः संकलनादेकस्यैव च विप्रस्य त्यागात् षड्विंशतिसहस्राणि शतद्वयमेकोनपञ्चाशदधिकं भवति (६)। पञ्चमे चतुर्षु गुरुद्वयावस्थितेषु मु[8]क्तेषु शेषेषु लक्षं[9] चत्वारि सहस्राणि नवशतानि त्रि[10]नवत्यधिकानि भवन्ति (५)। तैरपि चतुर्थे मध्यगुरोरधः पञ्चानां कलनाच्छेषस्य गणद्वयस्य त्यागात् पञ्चलक्षाणि चतुर्विंश[ति]सहस्राणि नवशतानि त्रिषष्ट्यधिकानि भवन्ति (४)। तैश्च तृतीये द्विगुरोरधश्चतुर्णां गुणनात्[11] त्रयाणां त्यागात्[12] विंशतिलक्षाणि नवनव[ति]सहस्राणि अष्टौ शतानि चैकोनपञ्चाशदधिकानि भवन्ति (३)। तैरपि द्वितीयेऽन्तगुरोरधः पञ्चानां संकलनात् त्रयाणां च त्यागादेका कोटिर्लक्षाणि च [चत्वारि नवनवतिसहस्राणि द्वि]चत्वारिंशदधिके च शते द्वे संपद्येते । ततश्च प्रथमेन्तगुरोरधस्तैश्चतुर्णां गुणनात् द्वयोश्च वर्जनात् कोट्यश्चतस्रः एकोनविंशतिर्लक्षाणि षण्णवतिसहस्राणि नवशतानि [षट्]षष्ट्यधिकानि भवन्ति । तत्प्रमाणा गाथेयमिति कथनीयमिति ॥ ३९ ॥

उद्दिष्टविधेरनन्तरं यदुक्तं पुरओ णट्ठं विआणेहीति तदाह—**स[13]विअप्पेण** इति ।

**सविअप्पेणुव्वणिए सुद्धे रासिंपि(सि) अंतिमं कुणह ।**
**सेसे सरू[14]वअं चिअ लद्धे सेसे गणं देहि[15] ॥ ४० ॥**

**स्वविकल्पेनोद्वृत्ते शुद्धे राशावन्तिमं कुरु ।**
**शेषे स्वरूपमेव लब्धे शेषे गणं देहि ॥ ४० ॥**

---

१ AB add पञ्चदश्यां गाथायां after this word. २ Com. obviously reads विआणिहिसि as he counts the 15th gana as आदिगुरु. ३ चतुर्दशस्य गुणनागुणनात् AB. ४ गुणाननुयाणां च AB. ५ चतुष्कसंख्यानां गणन AB. ६ स्योक्तेषु AB. ७ षट्विंशत्यधिकं AB. ८ व्यक्तेषु AB. ९ लक्षणं AB. १० त्रिपत्यधिकानि AB. ११ गुणानां AB. १२ त्यक्तानां AB. १३ सवसुप्पणेति A; सवसुप्पाणति B. १४ मत्तधअं AB. १५ हेहि AB.

प्रत्येकमंशकस्य यः स्वो विकल्पस्तेन तस्मिन्नष्टाङ्के उद्धृते शोधिते सति विलोकनीयं यदि मुच्यते तदान्तिमं गणं सर्वलघुं देहि । शेषे च स हि सरूपमेव । यद्येकः शिष्यते तदा प्रथमं द्वौ चेदन्तगुरुं तृतीये मध्यगुरुमादिगुरुं वा । किं च लब्धे शेषे एककादौ गणं देहि एकेनाधिकं भागहारिणं कुर्वित्यर्थः । यथा पूर्वोक्तायामेक(व) कोटिचतुष्टयमेकोनविंशतिर्लक्षाणि षण्णवतिसहस्राणि [षट्]षष्ट्यधिकानि च नवशतानीति नष्टाङ्कं स्थापयित्वा केनचित्पृष्टे कीदृशमस्या रूपं अंशकानामिति । पश्चादयं राशिर्निवेश्यः । अनन्तरं प्रथमांशानयने तदीयेन विकल्पेनोद्धरेत् । तदीयो विकल्पश्चतुष्कम् । कोटी-(टि)रेका लक्षचतुष्कं नवनवतिसहस्राणि द्वे च शते एकचत्वारिंशदधिके इत्यनेन चतुर्भागेन शोधनम् । शोधिते द्वौ शिष्येते यौ तत्परिमाणं द्वितीयमन्तगुरुं स्थापयेत् । उदा० IIS । अनन्तरं येनैव भागरूपमपहृतं (तत्) लब्धे शेषे गणं देहीति वचनात् सैकं कुर्यात् यथा तद्द्वाचत्वारिंशद्भवन्ति । अनन्तरं द्वितीयगणानयनावसरे यत्तद्भागापहारि सैकं कृतं तस्य द्वितीयस्वविकल्पेन पञ्चकेन [उद्धारे] विंशतिर्लक्षाणि नवनवतिसहस्राण्यष्टौ शतानि अष्टचत्वारिंशदित्यनेन पञ्चभागेन भागमपहृत्य द्वाववशिष्येते यौ तत्स्वरूप एवान्तगुरुस्तत्र निवेश्यः । उदा० IIS । तस्मिन्सैककृते नवान्ते भवन्ति । अनन्तरं तृतीयावसरे तस्यानन्तरभागापहारिणः पञ्च लक्षाणि चतुर्विंशतिसहस्राणि द्वाषष्ट्यधिकानि नवशतानीत्यनेन चतुर्भागेपहृते एकस्मिन् शिष्टे तत्स्वरूपमेव तृतीये प्रथमं द्विगुरुं कुर्यात् । उदा० SS । भागापहारिणश्चान्ते द्वयोः सैकयोः कृतयोः त्रयोन्ते संपद्यन्ते । ततोपि चतुर्थगणावसरे तस्य लक्षमेकं[1] चत्वारिंशत्सहस्राणि नवशतानि द्विनवत्यधिकानीत्यनेन पञ्चभागेऽपहृते त्रिकस्य शेषाच्चतुर्थे मध्यगुरुर्विनिवेश्यः । उदा० IIS, IIS, SS, ISI । भागापहारी सैकः कार्यः यथावसाने त्रीणि भवन्ति । पश्चादपि पञ्चमावसरे तस्य षड्विंशतिसहस्राणि द्वे शते अष्टचत्वारिंशदधिके इत्यनेन चतुर्भागे हृते शिष्टादेकस्मात्प्रथमस्य तत्र स्थितिर्विधेया । उदाहरणम् IIS, IIS, SS, ISI, SS । अनन्तरं भागहारिणं सैकं कृत्वा षष्ठावसरे त्रयोदशसहस्राणि चतुर्विंशत्यधिकं शतं चेत्यनेन द्विभागेन षष्ठसंभविना भागे हृते शिष्टे चैकस्मिन् तत्र प्रथमः षष्टेति(पि) मध्यगुरुः । उदा० IIS, IIS, SS, ISI, SS, ISI । ततोपि तं सैकं निवार्य यथान्ते पञ्चानामवस्थानम् । सप्तमस्य चावसरे तस्यैकाशीत्याधिके द्वात्रिंशता शतैश्चतुर्भागे हृते शिष्टे चैकस्मिन् प्रथमं तत्र गणं [द्विगुरुं] कार्यम् । उदा० IIS, IIS, SS, ISI, SS, ISI, SS । अनन्तरमपि भागहारिणि सैककृते निःसंशयत्वादष्टमे गुरुस्थितेर्नवमस्यावसरे तस्य शतान्यष्ट विंशतिश्चेत्यनेन चतुर्भागे कृते द्वयोश्च शेषत्वादन्तगुरुं तत्र स्थापयेत् । पश्चादपि भागहारिणि सैके कृते दशमस्य चावसरे शतेन चतुःषष्ट्या पञ्चभागे हृते शिष्टे चैकस्मिन्प्रथमस्तत्र कर्तव्यः । भागापहारी च सैकः कार्यः । उदा० IIS, IIS, SS, ISI, SS, ISI, SS, S; IIS, SS । पश्चात्तस्याप्येकादशावसरे एकचत्वारिंशता चतुर्भागे हृते शेषत्वाच्चैकस्य प्रथम एव धेयः । IIS, IIS, SS, ISI, SS, ISI, SS, SII, IIS, SS, SS । ततस्तस्यापि द्वादशावसरे सैकस्य अष्टभिः पञ्चभागापहरणाद् द्वयोश्च [शेषा]दन्तगुरोरेवाव-

---

१ हृतं AB. २ तौस्व० AB. ३ लक्षणमेकं AB. ४ त्रकस्य AB. ५ देकस्मिन् AB. ६ षष्ठे AB. ७ प्रथमं मध्यमगुरुः AB. ८ तापहारिणि AB. ९ [illegible] AB.

स्थितिः । उदा० I I S, I I S, S S, I S I, S S, I S I, S S, S; I I S, S S, S S, I I S । अनन्तरं त्रयोदशावसरे तस्य सैकस्य द्वाभ्यां च चतुर्भागापहरणादेकस्या[1]वशिष्टत्वात्तत्र प्रथमस्यैवावस्थानम्। उदा० I I S, I I S, S S, I S I, S S, I S I, S S, S; I I S, S S, S S, I I S, S S। तदपि सैकं कार्यम्। चतुर्दशस्य लघोः स्थितिर्निर्वाचनैव। ततश्च पञ्चदशावसरे त्रयश्च चतुर्णां भागं न च प्रयच्छन्तीति त्रयाणामेव शेषत्वादादिगु[2]रोरेवावस्थानम्। षोडशगुरुरसंपाय एव। उदाहरणं I I S, I I S, S S, I S I, S S, I S I, S S, S; I I S, S S, S S, I I S, S S, I, S I I, S। अत्र सर्वशुद्धेरभावाद्विप्रस्याभावः। यस्मादुक्तं 'सुद्धे रासिंमि अंतिमं कुणसु' इति। एवं चतुर्मात्रपञ्चमात्रादिगणविरचितानां सर्वेषामेव विध्यपवादौ विनिश्चित्य कार्यं यथा सुमनसः उद्दिष्टे प्रत्येकं पादे गणत्रयं गुरुश्च ये विहिताः तेषां गजाख्ययोश्चतुर्विकल्पत्वं सामान्यसंज्ञानिर्दिष्टत्वान्मध्यगुरोरभावात्। तृतीयं च तुरंगमाख्यं द्विविकल्पं कर्णकरवर्जनात्। चामरं चैकविकल्पमेवं पादचतुष्टयेपि विनिवेशात् षोडश योनिस्थानानि भवन्ति। तेषामन्त्यादारभ्य तथैव गुणनं शेषांशत्यागश्च कार्यः। तथैव नष्टविधानम्। एवं नष्टोद्दिष्टविधिप्रकरणद्वयमुक्तम् ॥ ४० ॥

इदानीं यदुक्तं 'तहेअ लहुक्किरिअं' इति तदाह—**छंदं जित्तिअ** इति।

**वित्ते[3] जित्तिअसंखा ठविऊण ठवेह वित्तपाअंकं।**
**एएहिं अ गुणिएँ[4]हिं अद्धेर्णे[5] हुअंति गुरुलहुआ ॥ ४१ ॥**

छन्दो यावत्संख्यं स्थापयित्वा स्थापय तस्य पादाङ्कम्।
अनेनैव गुणितेनार्धेन भवन्ति गुरुलघवः ॥ ४१ ॥

प्रत्येकं छन्दो यावत्संख्यं यावत्परिमाणं भवति तत्र च संस्थापयित्वा तस्यैव पादपरिमाणेनाधोनिवेशितेन गुणितं च विधार्या[6]र्धद्वयं तस्य कुर्यात्। कृते च तस्मिन् एकस्माल्लघूनां परिच्छेदो भवत्य-[न्य]स्माच्च गुरूणामिति। यथा त्र्यंतद्यदष्टुं (?) कियन्ति लघून्यस्य कियन्त्यस्य च गुरूणीति। तस्य संख्यामष्टकं स्थापयित्वा पादपरिमाणेनानन्तरं त्रिकेण गुणयेत्। तेन गुणानां चतुर्विंशतौ स्थितायां अर्द्धद्वयं द्वादश वेति पश्चात्कृतं तत्परिमाण(णा) गुरवो लघवश्च कथनीयाः। यथैव तस्य द्वादश गुरवो लघवश्च द्वादशेति। एतत्पा[7]तालप्रस्तारे दर्शितमपि केवलप्रयोगार्थं पुनरुक्तम् ॥ ४१ ॥

पुनरपि भङ्ग्यन्तरेण लघुक्रियामाह—**एक्कक्खर** इति।

**एँ[8]क्कक्खरपत्थारे मअच्छि एक्को अ होइ फरिसो अ।**
**[बे]अक्खरपत्थारे वेआ फरिसा विणिदिट्ठा ॥ ४२ ॥**

एकाक्षरप्रस्तारे मृगाक्षि एक एव भवति स्पर्शश्च।
द्व्यक्षरप्रस्तारे वेदाः स्पर्शा[9]ः विनिर्दिष्टाः ॥ ४२ ॥

---

१ देवकस्य विशिष्टत्वात् AB. २ दन्तगुरौ० AB. ३ छंदं Com. ४ गुणिअ मुद्धेण AB. ५ गुणितमानेन AB. ६ विधायानद्वयं AB. ७ Portion from पातालप्रस्तारे to यथा (both inclu.) on p. १०१, l. २० is missing in A. ८ Vv. 42–44 are found at the end of the chapter after v. 62 in both A and B. But the Com. reads them at the proper place. ९ स्पृष्टा AB.

वेदाश्चत्वारः । स्पष्टमन्यत् ॥ ४२ ॥

किंच । **तिण्णं** इति ।

**ती(ति)[ण्णं] हिंतो विउणा विगुणाओ वड्ढिआ तहा वेआ ।**
**चउवण्णेसुवि विउणा विउणावि वि[1]वड्ढिआं वेआं ॥ ४३ ॥**

त्रयाणामस्[2]मादृद्विगुणा द्विगुणेष्वपि वर्धितास्तदा वेदाः ।
चतुर्णां द्विगुणा द्विगुणैर्वर्धिताश्च वेदैः ॥ ४३ ॥

तस्माच्चतुष्कात् त्रयाणां लघवो द्विगुणौ अष्टौ भवन्ति । तेषु च वेदाश्चत्वारो वर्धिताः कार्याः । एवं द्वादश लघवो भवन्ति । हिन्तो अस्मात् । चतुरक्षरस्यास्मात् त्र्यक्षरलघुपरिमाणाः द्विगुणा लघुसंख्याः चतुर्विंशतिष्कार्याः । किंभूताः । वेदैश्चतुर्भिर्द्विगुणैः संवरि(लि)ताः । यथा चतुर्विंशतिरष्टौ चेति द्वात्रिंशल्लघवो भवन्ति ॥ ४३ ॥

एतदेवोपसंहरन्नपरेषामाह—**एवं** इति ।

**एवं विउणाउच्चिअ वेचउहिं वड्ढिया मुणेअव्वा ।**
**लहुकिरिअत्तिअ जाव अ उक्किअ छंदं समत्तंसि(ति) ॥ ४४ ॥**

एवं द्विगुणाः सर्वे परिवर्ध्यन्ते द्विगुणा द्विगुणैः ।
लघुक्रिया यावदेतदुत्कृतिछन्दः समाप्तमिति ॥ ४४ ॥

एवमनया प्रक्रियया सर्वे छन्दोविशेषलघवोऽनन्तरलघुपरिमाणविवक्षिताः द्वि[3]गुणीकृता अनन्तरवृद्धिविवक्षया द्विगुणैरेव परिवर्धन्ते । यथा पञ्चाक्षरे चतुरक्षरलघुपरिमाणं द्वात्रिंशद् द्विगुणीकृत्य चतुरक्षरस्यैव वृद्धया अष्टकेन द्विगुणीकृतया षोडशद्व(त)या स्थितया परिवर्ध्यन्ते । तेन चतुःषष्टिः षोडशभिः परिवृद्धया अ[4]शीतिर्भवति । एवं षडक्षरस्य द्विनवत्यधिकं शतं लघुपरिमाणं कथनीयम् । एवमियं लघुक्रिया तावत् क्रियते यावदेतदुत्कृतिछन्दः षड्विंशत्यक्षरं समाप्तमिति ॥ ४४ ॥

अंशकवृत्तानामाह—**काऊण** इति ।

**वि[5]त्तोंण वण्णगणणं मत्ताओ हुअंति जाओ अहिआओ ।**
**ते गुरुआ सेसा उण लहुआ सव्वासु जाईसु ॥ ४५ ॥**

कृत्वा वर्णगणनं मात्रा भवन्ति या अधि[6]काः ।
ते गुरवः शेषाः पुनर्लघवः सर्वासु जातिषु ॥ ४५ ॥

सर्वासु लक्ष्म्याद्यासु जातिषु वर्णानामक्षराणां प्रथमं गणनां कृत्वा या मात्रा अधिका भवन्ति ते गुरवः तत्प्रमाणा गुरव इत्यर्थः । तेभ्यश्च गुरुभ्यः शिष्यन्ते ये वर्णास्ते लघव इति वाच्यम् । यथास्यामेव केनचित्पृष्टे कियन्तोस्य लघव इति । प्रथमं वर्णगणना कार्या । सप्तत्रिंशतो वर्णेभ्यश्च सप्तपञ्चाशतो मात्राभ्यो विंशतिः शिष्यन्ते यास्तत्परिमाणं गुरूणाम् । सर्वस्यां[7] एव गाथाया मात्राः सप्तपञ्चाशदेव

१ तेतमम वआ AB. २ मस्माभिर्द्वि० A. ३ त्रिगुणीकृता AB. ४ स्वीतिर्भवति AB. ५ काऊण Com. ६ अधेयाः B. ७ सर्वाया: B.

नियताः। अनन्तरं सप्तत्रिंशद्वर्णेषु गुरुपरिमाणाद्विंशतेः येन सप्तदश शिष्यन्ते ते लघवः। एवमस्यां सप्तत्रिंशद्वर्णायां विंशतिर्गुरवः सप्तदश लघव इति वक्तव्यम्। अन्येषामियमेव गतिः। यथा सुमनसः एकचत्वारिंशद्वर्णायाः 'कुण करकण्ण' इति प्रभेदे सामान्येन चास्याः षट्पञ्चाशन्मात्राः ताभ्यो वर्णपरिमाणे हृते पञ्चदश गुरवः शिष्यन्ते तेभ्यश्च षड्विंशतिर्लघव इति। एवमन्यत्रापि विधेयम् ॥४५॥

संख्यामाह—[**अंतिमवण्ण** इति]।

**अंतिमवण्णे विउणं वण्णे वण्णे अ विउणअं कुणह।**
**पायक्खरपरिमाणं संखाए एस णिद्देसो ॥ ४६ ॥**

**अन्तिमवर्णाद्द्विगुणं वर्णेवर्णे [च] द्विगुणं कु[रुत]।**
**पादाक्षरपरिमाणं संख्याया एष निर्देशः ॥ ४६ ॥**

सर्वस्यैव छन्दसो यत्पादे परिमाणमक्षराणां यथा त्र्यक्षरादीनां त्रिकादि तत्र योन्तिमो वर्णस्तद्द्विगुणीकृतं यावत्पादाक्षर[परि]माणं तावत्प्रत्येकवर्णे द्विगुणं कुर्यात्। एष संख्याया विधिः। यथा त्र्यक्षरस्य कियती संख्या भवतीति पृष्टे तस्यान्तिमे वर्णे तृतीयाक्षरे यथा द्विद्विकौ चतुर्थमिति(?) भवति। पश्चात्तृतीयमपि द्विगुणीकृत्याष्टके सति वक्तव्यं यथा त्र्यक्षरमष्टसंख्यमिति ॥ ४६ ॥

अस्यैव विच्छित्त्यन्तरमाह—**एक्कक्खर** इति।

**एक्कक्खरम्मि दुच्चिअ विउणा विउणा य सेसवण्णेसु।**
**पत्थरिअव्वं छउए जावं ते होंति छव्वीसा ॥ ४७ ॥**

**एकाक्षरे द्वावेव द्विगुणाश्च वर्णवृद्ध्या।**
**प्रस्तरितव्यं तावद्यावत्ते भवन्ति षड्विंशतिः ॥ ४७ ॥**

अनया प्रक्रियया एकाक्षरे द्वावेव भवतः। अनन्तरं वर्णानामक्षराणां [वृद्ध्या] प्रस्तरितव्यं यावद् द्विगुणाः द्विगुणसंख्याया द्वात्रिंशद्भवन्ति(?) द्विगुणया द्विगुणा संख्या(?) षड्विंशतिर्भवन्ति। यथा द्व्यक्षरे चत्वारस्त्र्यक्षरेऽष्टौ चतुरक्षरे षोडश इत्येवमाद्या वदन्ति ॥ ४७ ॥

तस्याः स्वयमेव प्रपञ्चमाह—**चउसट्ठी** इति।

**चउसट्ठी अट्ठलआ अट्ठसहस्सेगंसत्तरी लक्खा।**
**सुन्दरि छक्कोडीओ उक्किइछंदम्मि संखाई।**
**अंतोउअरेणं चिअ दंडलभेआ विणिद्दिट्ठा ॥ ४८ ॥**

**चतुःषष्टिरष्टशतान्यष्टौ सहस्राण्येकसप्ततिर्लक्षाणि।**
**सुन्दरि षट्कोटय उत्कृतिछन्दसि संख्यायाः ॥**
**अतःपरेण मुग्धे दण्डकभेदा मन्तव्याः ॥ ४८ ॥**

---

१ एकोनचत्वारिंशत् B. २ सामान्यं नवार्याः ३ ससदश B. ४ तेभ्यश्चत्वारिंसति B. ५ वर्णपदे B. ६ त्रिंशदक्षरे B. ७ वण्णवण्णेसु B; यावसेवाणसुं A; वण्णवुड्ढीए Com. ८ द्वयैव B. ९ अट्ठसहसाई सत्तरी AB. १० This line is found at the end of v. 60 in both AB.

विस्पष्टार्थम् । किंच । **अंतोपरेण** इति ॥ अतःपरं छन्दोव्यवहारो न भवतीत्यर्थः ॥ ४८ ॥

इदानीं गायत्र्यन्तानां उष्णिगन्तानां उत्कृत्य[न्ता]नां पूर्वेषां छन्दसां साकल्येन का संख्या भवतीति तदन्तविधिमाह—**पत्थार** इति ।

**[पत्थारे पत्थरिए जित्तिअमेत्ताइं होंति वित्ताइं ।**
**मग्गे तावंतिच्चिअ दोहिं रहिआणि किज्जंति ॥ ४८ अ ॥]**

[1]**प्रस्तारे प्रस्तरिते यावन्मात्राणि भवन्ति वृत्तानि ।**
**मार्गे तावन्त्येव द्वाभ्यां रहितानि क्रियन्ते ॥ ४८ अ ॥**

कस्यार्धे(?) छन्दसि प्रस्[2]तारे विहिते संति यावन्मात्राणि वृत्तानि भवन्ति यथा गायत्र्यस्य चतुःषष्टिर्मार्गे पश्चाद्भागेपि द्वाभ्यां रहितानि तावन्त्येव क्रियन्ते उक्तादीनां यथा द्विषष्टिरिति । सर्वं द्वाषष्टिश्चतुःषष्टिश्चेति मिश्रीकृत्य षड्विंशत्यधिकं शतं गायत्र्यान्तरं तदन्तफलं वाच्यम् । एवमेवोत्कृत्यन्तानामपि विधेयम् ॥ ४८ अ ॥

वर्णसंख्योपसंहारद्वारेण मात्रावृत्तानामाह[3]—**एवं च०** [इति]

**एवं च वण्णवित्ते मत्तावित्ताण[4] अन्नहा होइ ।**
**दो दो पुव्वविअप्पे जा मेलविऊण जायए संखा ।**
**सा उत्तरमत्ताणं संखाए एस निद्देसो ॥ ४९ ॥**

**एवं च [वर्ण]वृत्ते मात्रावृत्तानामन्यथा भवति ।**
**द्वौ द्वौ पूर्वविकल्पौ या मी(मे)लयित्वा जायते संख्या ।**
**सा उत्तरमात्राणां संख्याया एष निर्देशः ॥ ४९ ॥**

एवं च वर्णवृत्तानां संख्यानयनविधिरुक्तः । मात्रावृत्तानां च यो विधिः सोन्यथा भवति । कथमित्याह—**दो दो पुव्व** इति । प्रत्येकं मात्रा[5]वृत्तस्य पूर्वौ प्रथमौ विकल्पौ य[6]था तिसृणामेकं द्वौ चेति पूर्वविकल्पौ मिश्रौ त्रयो भवन्ति । चतसृणां द्विमात्रत्रिमात्रविकल्पौ द्वौ त्रयश्चेति मिलिताः पञ्च भवन्ति । पञ्चानौ(नां) द्वौ त्रिमात्रचतुर्मात्रपूर्वविकल्पौ मेलितावष्टौ दीयन्ते । एवं चतुर्मात्रपञ्चमात्रौ मिश्रीकृतौ षण्णां त्रयोदश भवन्ति । तद्वच्च पूर्वविकल्पद्वयमेलनादेकविंशतिः सप्तानाम् । एवं सर्वेषां मात्रावृत्तानां कर्तव्यम् ॥ ४९ ॥

अस[7]मवृत्तानामाह—[**गाहाणं०** इति] ।

**गाहाण[8] समा भेआ खंधं[9]अपमुहाण विसमआ होंति ।**
**विवरीअच्चिअ लहुआ संवलिपत्थारणिद्दिट्ठा[10] ॥ ५० ॥**

---

१ This Sanskrit stanza only is found in the Commentary. २ प्रकारे विहिता गति B. ३ Stanza 49 of the text is wholly reproduced after आह B. ४ वण्णे वित्तावित्ताण A; वण्ण वित्तावित्ताण B. ५ मात्राप्रवृत्तस्य B. ६ See note 7 on p. 98. ७ अस्सवृत्ता० AB. ८ Stanzas 50 and 51 of the text are wholly reproduced in the Com. AB. ९ [illegible] AB. १० णिद्दिट्ठा AB.

गाहाणं(थानां) समा भेदा स्कन्धकप्रमुखानां विषमा भवन्ति ।
विपरीताश्च लघवः शाल्मलिप्रस्तारनिर्दिष्टाः ॥ ५० ॥

गाथानां समा भेदाः षड्विंशतिः स्कन्धकानां विषमा एकोनत्रिंशद्यथा । लघवः पुनर्विपरीताः समानां विषमा विषमाणां च समा इत्यर्थः । एते च भेदा लघवश्च मया शाल्मलिप्रस्तारे निदर्शिताः ॥ ५० ॥

भेदसंख्यार्थमाह—[गाहाणं इति] ।

गाहाणं जाईओ सुन्दरि भणिआओ जइवि छव्वीसा ।
जलणिहिपत्थारे उण अण्णच्चिअ पिंडणा होइ ॥ ५१ ॥

[गाथानां जातयः सुन्दरि भणिता यद्यपि षड्विंशतिः ।
जलनिधिप्रस्तारे पुनरन्यैव पिण्डना भवति ॥ ५१ ॥]

यद्यप्येताः षड्विंशतिरुक्ता जातयस्तथापि जलनिधिप्रस्तारे अन्यैव[1] पिण्डना गणना भवति ॥ ५१ ॥

तामाह—सव्वे पुव्वविअप्पा इति ।

सव्वे पुव्वविअप्पा गुणिऊणं उत्तराण दाअव्वा ।
गाहासंखाणअणं इअ पुव्वाणं अ णिद्दिट्ठं ॥ ५२ ॥

सर्वे पूर्वविकल्पा गुणयित्वोत्तरेषां दातव्याः ।
गाथासंख्यानयनं [इति] पूर्वेषां निर्दिष्टम्[2] ॥ ५२ ॥

पूर्वविकल्पाश्चतुःपञ्चकप्रभृतयः सर्वे गुणयित्वा पिण्डयित्वा उत्तरेषां दातव्याः । अन्तिमं च यावदन्ते फलं भवति सा संख्या वक्तव्या इति पिङ्गलादिभिरुक्तम् । यथा प्रथमा(मैः)श्चतुर्भिः पञ्च गुणिता द्वितीये विंशतिर्भवन्ति । तृतीये तैश्चत्वारो गुणिता अशीतिर्जायते । चतुर्थे तया पञ्च गुणिताः चत्वारि शतानि जायन्ते । पञ्चमे च तैश्चतुर्णां गुणने षोडश शतानि भवन्ति । षष्ठे तैर्द्वयोर्गुणनात् द्वात्रिंशच्छतानि[3] संपद्यन्ते । सप्तमे तैश्चतुर्णां गुणनाद् द्वादश सहस्राण्यष्टौ शतानि च । अष्टमे तथैव । नवमे तैश्चतुर्णामेकपञ्चाशत्सहस्राणि शतद्वयं च भवति । दशमे तैरपि च पञ्चानां लक्षद्वयं षट्पञ्चाशत्सहस्राणि भवन्ति । तैरेकादशे चतुर्णां दशलक्षाणि चतुर्विंशतिसहस्राणि जायन्ते । द्वादशे एकपञ्चाशल्लक्षाणि विंशतिश्च सहस्राणि । तैरपि त्रयोदशे चतुर्णां कोटिद्वयं चत्वारि लक्षाणि अशीतिश्च सहस्राणि । चतुर्दशे तथैव[4] ॥ ५२ ॥

पञ्चदशे चतुर्णां संख्यानामेवाह—अट्ठेव[5] इति ।

अट्ठेव अ कोडीओ [परओ] एक्कूणवीसलक्खाइं ।
वीससहस्साइं तहा गाहाणं एत्तिआ संखा ॥ ५३ ॥

अष्टावेव कोटयः पराण्येकविंशतिर्लक्षाणि ।
विंशतिः सहस्राणि तथा गाथानामियती संख्येति ॥ ५३ ॥

---

१ अस्यैव AB. २ पूर्वादार्यनिर्दिष्टं AB. ३ द्वारं सत् AB. ४ तथैते पञ्च AB. ५ अट्ठिइए AB. ६ Before this word both A and B repeat the words अई गणसव्वाणं मत्ताअडिला from v. 55.

एवं सर्वेषामपविस्यपरादोः सत्वा(?)कर्तव्यं गाथारूपलक्षणम्। अनया प्रक्रियया वैतालीयादीनामतिव्याप्तिर्नायातीत्यतोऽस्माभिर्गाथेयं रचिता—[वइआलिय] इति।

**वइआलिअसमपाए अद्धट्ठिअचलणमाणमुंप्फुसंसु।**
**तइअचउत्थेसु सआ ठाणेसुं णिअविअप्पगुणिएसुं॥ ५४॥**

वैतालीयसमपादे मार्गस्थितचरण[मान]मुन्मार्जय।
तृतीयचतुर्थयोः सदा स्थानयोर्निजविकल्पगुणितयोः॥ ५४॥

वैतालीयस्य प्रत्येकं द्विमात्रो द्विप्रभेदगुणिते समपादे द्वितीयचतुर्थादौ तृतीयचतुर्थगणस्थानयोर्निजेनात्मीयेन विकल्पेन गुणितयोः सतोः मार्गास्थितचरणमानं पश्चान्निविष्टपादसंख्यामुन्मार्जय। शोधय। यथा प्रथमौ द्वौ गुणितौ चत्वारो द्वितीयविकल्पे भवन्ति। तृतीयेऽष्टौ। विहंगपतिध्वजाग्रस्थानमेकप्रभेदत्वान्न गुण्यते। तस्मात् तत्स्थानद्वयमपि मानवत्। अनन्तरं द्वितीयपादस्य प्रथममष्टभिर्द्वयोर्गुणनात् षोडश भवन्ति। तेनापि द्वितीयद्वयोर्द्वात्रिंशत्। ततश्च तैस्तृतीयस्य चतुःषष्टिर्या जायते तस्य मार्गस्थितचरणमानोन्मार्जनं मार्गस्थितचरणस्य प्रथमपादस्य मानमष्टौ तेषां शोधनात् षट्पञ्चाशद्भवन्ति। तेनापि चतुर्थे द्वयोर्द्वादशाधिकशतं तत्रापि मार्गे स्थितचरणमानस्याष्टकस्योन्मार्जनाच्चतुरधिकं शतं भवति। तृतीयपादस्य प्रथमे द्वयोरनन्तरसंख्यया गुर्णनादष्टाधिकं शतद्वयं भवति। द्वितीये द्वयोः षोडशाधिकं शतचतुष्टयं तैश्च तृतीये द्वयोरष्टौ शतानि द्वात्रिंशदधिकानि भवन्ति। अनन्तरं चतुर्थपादस्य प्रथमे द्वयोः संख्या षोडशशतानि चतुःषष्ट्यधिकानि जायन्ते तैर्द्वितीये त्रयस्त्रिंशच्छतानि अष्टाविंशत्यधिकानि भवन्ति। तैरपि तृतीये षट्षष्टिः शतानि षट्पञ्चाशदधिकानि भवन्ति। तेषां मार्गास्थितचरणत्रयमानमष्टशतानि द्वात्रिंशदधिकानि इत्यनेन लुप्स्या अष्टपञ्चाशत् शतानि चतुर्विंशत्यधिकानि भवन्ति। अनन्तरं चतुर्थेपि तेषां गुणनान्मार्गस्य(स्थि)[त]चरणमानोन्मार्जनाच्च दशसहस्राणि अष्टौ च शतानि षोडशाधिकानि यानि भवन्ति॥ ५४॥

सामान्येनाह—दुवईगण इति।

**दुवईगणसव्वा[म्मा]णं मत्ताअडिलाण तह अ सम्माणं।**
**लहुगणणं चिअ विहडइ छा(छ)उओवरि सीसआणं च॥ ५५॥**

द्विपदीनां गणसमानां मात्राडिलानां तथैव शम्यानाम्।
लघुक्रिया एव विघटते तथा शीर्षकानां च॥ ५५॥

एतेषां वृत्तानामनियतांशकलत्वाल्लघुक्रियैव विघटेत नान्यत्प्रस्तारादि॥ ५५॥

इदानीमध्वोपयोगि योजनादिलक्षणमाह—चउअंगुल इति।

---

१ The stanza is wholly reproduced here. AB. २ पुप्पुसमुत AB. ३ Portion from तृतीयेऽष्टौ to ततोपि पंक्तिः ( both inclu. ) on p. 105, l. 4 is dropped in A. ४ गुणं दृष्टाधिकं B. ५ द्वन्तेरसंख्या B. ६ अष्टपञ्चशतानि B. ७ सामान्येवाथा। दुपरेणेति B. ८ गुणसमानां B. ९ मात्रारत्नानां B. १० गम्यानां B. ११ लघुर्जमा B. १२ संख्यानामकादीनां B.

चउअंगुलो अ रामो तिहिं रामेहिं विआणसु विअत्थिम्।
दोण्णि विअत्थी हत्थो चउहत्थो धणुहरो होइ ॥ ५६ ॥

धणुअरदुईसहस्सा मअच्छिं कोसस्स होइ परिमाणं।
कोसा अट्ठ तहच्चिअं जोइणंसंखा विणिद्दिट्ठा ॥ ५७ ॥

चतुरङ्गुलश्च रामस्त्रिभिः रामैः जानीहि वितस्तिम्।
द्वौ वितस्ती हस्तश्चतुर्हस्तो धनुर्धरस्तथा ॥ ५६ ॥

द्वे एव धनुःसहस्रे क्रोशस्य [भवति] परिमाणम्।
क्रोशा अष्टौ [तथैव] योजनसंख्या [विनिर्दिष्टा] ॥ ५७ ॥

स्पष्टम् ॥ ५६ ॥ ५७ ॥

प्रस्तुतमिदानीं कथ्यते—एक्कंगुल इति।

एक्कंगुलो अ रुंधइ चमरो फरिसोचि अंगुलं चेअ।
चमरफरिसांतराले एक्केक्कं अंगुलं होइ ॥ ५८ ॥

[एकाङ्गुलं च रुणद्धि, चमरः स्पर्शोऽप्यङ्गुलं चैव।]
चमरस्पर्शान्तराले एकमेवाङ्गुलं भवति ॥ ५८ ॥

तेनैकाक्षरस्य भेदद्वयेऽङ्गुलत्रयं च गतिः। यतो गुरुण्येकोऽङ्गुलो लघुनि चैकोऽन्तराले चैक इति ॥ ५८ ॥

एतदेवाह—[अट्ठक्खरस्स इति]।

अट्ठक्खरस्स हत्थो पंचधणू अंगुलत्तअं रामो।
अष्टाक्षरश्च चरणद्विपञ्च धनूंषि हस्तं च द्वौ रामौ ॥

अनार्षोयं पाठः। यस्मादष्टाक्षरे षट्पञ्चाशदधिकं शतद्वयं वृत्तानां संभवति। तावदेवाङ्गुलपरिमाणम्। तदन्तराले च तावदेवैकेन न्यूनम्। एवमेकादशाधिकानि पञ्चशतान्यङ्गुलानामष्टाक्षरे पा[दे] भवन्ति। तेषां च 'चउअंगुलो अ राम' इति चतुर्भागे हृते रामाणां सप्तविंशत्यधिकं शतं भवति अङ्गुलानि त्रीण्यत्रशिष्यन्ते। पश्चात् 'तिहि रामेहिं' इति त्रिभिरपहृतभागे चत्वारिंशद्विह(त)स्तयो भवन्ति। एकश्च रामः शिष्यते। अनन्तरं 'दुण्णि विअत्थी' इति द्वाभ्यां कृते भागे हस्तानामेकविंशतिर्भवति। पश्चात् 'चउहत्थ' इति चतुर्भिरपहृते भागे पञ्च भवन्ति धनूंषि हस्तश्च शिष्यते। एवं पञ्च धनूंषि हस्तश्चैको रामश्चैकोऽङ्गुलत्रयमित्येवं परिमाणमस्य। तेनैवं चेयं गाथा पठनीया। 'अट्ठक्खरस्स हत्थो पंचधनू अंगुलत्तअं रामो' इति।

१ After this word A repeat the words संस्स मअच्छि. २ तहविअ AB. ३ वोइण० A; जोइइण० B. ४ जाणासु B. ५ वितप्तिं B. ६ ततश्चतुर्हतोवतवरस्तथा B. ७ सुकृतमि० B. ८ The line is wholly reproduced here. B. ९ तिण्णि B. १० The अनार्षपाठ is not clear. ११ एकोत्र रामः B.

किंच । [वुहई] इति ।

विहई तओवि विउणा तत्तो ति(वि)उणा वि पंत्तित्ति ॥ ५९ ॥

बृहती ततो द्विगुणा तद्द्विगुणा च पङ्क्तिरिति ॥ ५९ ॥

बृहती नवाक्षरा ततोऽष्टाक्षरपरिमाणाद् द्विगुणा । ततोपि पङ्क्ति । एवं त्रिष्टुप्प्रभृतीनि ॥ ५९ ॥ [एवं इति] ।

एवं विउणाविउणं पिंडज्जह जाव छव्वीसं ।
एक्केक्कंमि अ पुंसह रूअं विउणीकअंमि रासिंमि ॥ ६० ॥

एवं द्विगुणं द्विगुणं पिण्डय तावद्यावत् षड्विंशतिः ।
एकैकस्मिन्नपमार्जय रूपं द्विगुणीकृते राशौ ॥ ६० ॥

[एवं] द्विगुणद्विगुणया पिण्डय तावद्यावत् षड्विंशत्यक्षरा उत्कृतिरागच्छति । अत्र सर्वत्रैव द्विगुणे सत्येकस्य लोपः कार्यः इत्यतिव्याप्तिपरिहारायास्माभिर्गाथार्धं निवेशितं एक्केक्कंमि [इति] । अनेन गाथार्धेन सर्वेषामव्ययुक्तिर्घटते । एतदेवोक्तमन्यैर्यथा ।

द्वाभ्यां समहता संख्या रूपेणैकेन वर्जिता ।
छिन्नवृत्ताङ्गुलव्याप्तिरध्वयोगः प्रकीर्तितः ॥ इति ॥ ६० ॥

उत्कृतेरध्वपरिमाणमाह [जोअर्णसत्तासीइ इति] ।

[जोअणसत्तासीइं दो कोसा धणुसअं च इक्कहियं ।
हत्थेक्को दो रामा उक्किइछंदस्स परिमाणं ॥ ६१ ॥]

योजनानि सप्ताशीतिर्द्वौ क्रोशौ धनुःशतमेकाधिकम् ।
हस्त एकः द्वौ रामावुत्कृतिछन्दसः परिमाणम् ॥ ६१ ॥

अयमप्यनार्षः पाठः । यद्वृत्ताङ्गुलद्विगुणाया मूलसंख्याया एकोनन्यूनत्वादङ्गुलानां त्रयोदश कोटयो द्वाचत्वारिंशल्लक्षाणि सप्तदश सहस्राणि सप्तशतानि सप्तत्रिंशत्यधिकानि संभवन्ति । तेषां च रामैश्चतुर्भार्हृते कोटयस्तिस्रो लक्षाणि पञ्चत्रिंशत् चतुःपञ्चाशत्सहस्राणि चत्वारि शतान्येकत्रिंशदधिकानि भवन्ति अङ्गुलानि च त्रीण्येव शिष्यन्ते । पश्चाद्वितस्तिभिस्त्रिभागैर्हृते कोटिरेका दश लक्षाणि चतुरशीतिसहस्राणि दशाधिकानि चाष्टौ शतानि भवन्ति । रामः एकः शिष्यते । पश्चात् हस्तैर्द्विभागे हृते पञ्चपञ्चाशल्लक्षाणि द्विनवतिः सहस्राणि चत्वारि शतानि पञ्चाधिकान्यष्पोड(?) शेषो नास्ति । अनन्तरं हस्तानां धनुर्भिश्चतुर्भागे हृते त्रयोदशलक्षाण्यष्टनवतिसहस्राणि शतं चैकाधिकं भवति । हस्त एकः शिष्यते । ततोऽपि तेषां क्रोशैर्भागे हृते सहस्रद्वयेन षट्शतानि नवत्यधिकानि भवन्ति । एकाधिकं धनुःशतं शिष्यते । क्रोशानां योजनैरप्यष्टभागे शोधिते सप्ताशीतिर्भवति । क्रोशत्रयं तु शिष्यते ॥६१॥

---

१ The whole line is reproduced here. B. २ कआवि AB. ३ See note ३ on p. १०३. ४ पुंसस AB. ५ रासंमि AB. ६ Stanza 62 of the text wrongly reproduced here in the Com. AB. ७ Reconstructed from Com. ८ चमरैश्चतु० AB. ९ चत्वा...हृते B.

तेनैवमेव गाथा पठनीया । [जोअंणसत्तासीइ इति][1] ।

जोइणसत्तासीईं तिण्णि [अ] कोसा धणूणं[2] इक्कहियं ।
सअमुक्किईअ हत्थो रामो एक्को अ अंगुला तिण्णि ॥ ६२ ॥

योजनसप्ताशीतिस्त्रयः क्रोशा धनुषामेकाधिकम् ।
शतमुत्क्रतेर्हस्तो राम एकश्चाङ्गुलानि त्रीणि[3] ॥ ६२ ॥

चक्रपालात्मजगोपालविरचितायां कृतशिष्टविवृतौ षष्ठो नियमः । समाप्तेयं कैसिट्ठटीका[4] । कृतिर्भट्टचक्रपालसूनोर्गोपालस्य । मंगलं महाश्रीः ।

इअ कविसिट्ठवित्तजाईसमुच्चए[5] छट्ठो णिअमो समत्तो । कइसिट्ठछंदं समत्तं ॥



१ Stanza 62 again reproduced here in AB. २ धणूअ एकअं A; धणू अ एकहिअं B. ३ त्राणिभिः AB.
४ i. e. कइसिट्ठ which is the shorter name of our work. ५ समुच्चसमुच्चये AB.

## I. INDEX OF SANSKRIT METRES

## (वर्णवृत्त)

N. B. The author has employed a full stanza for defining a metre. So in his definitions, he uses the technical terms given by him at I. 18-20, 27-29, instead of making use of the Trikas like Pingala. But for the sake of brevity, I give below (after name of the metre) the composition of a line in Trikas. All these metres are Catuspadis, i.e., metres of four lines each. The figures refer to chapter and verse.





## II. INDEX OF PRAKRIT METRES

## (मात्रावृत्त)

N. B. A चतुष्पदी is indicated by (च) and a द्विपदी by (द्वि) after the name of a metre. When these are of the सम type, the composition of a single line is given, while in the case of Ardhasama metres the composition of विषम and सम lines is separately shown. The Figures 2 (rarely used), 4 and 5 respectively stand for a द्विमात्र, a चतुर्मात्र and a पञ्चमात्र of any type. Similarly, 6, 8 and 10 etc., stand for groups of so many मात्राs. When particular types of these are intended, they are shown by signs, where I stands for a short and S for a long letter. When a Gana is repeated, the number of times it is to be repeated is shown within brackets by means of the sign of multiplication. Mostly these metres are मात्रावृत्तs, though 17 among them are virtually वर्णवृत्तs.

## III. A GLOSSARY OF TECHNICAL TERMS

N. B. References to the text are given in brackets. Figures 4 and 5 stand for a चतुर्मात्र and a पञ्चमात्र respectively. s. means 'see'. I = A short letter; S = A long letter.

अशनि s. प्रहरण = 5
असि s. प्रहरण = 5
आभरण S (1.28)
आयुध s. प्रहरण = 5
उदधि s. सागर = विषम
कटक s. आभरण = S
कदलिका IS (1.28)
कणक s. प्रहरण = 5 (3.48)
कर s. करतल = IIS
करतल IIS (1.19)
करपल्लव s. कर = IIS
करवाल s. प्रहरण = 5
करि s. गज = 4
कर्ण SS (1.19)
कुञ्जर s. गज = 4
कुण्डल s. आभरण = S
क्षुरप्र s. प्रहरण = 5
गज 4 (1.17)
गजेन्द्र s. गज = 4
गन्ध I (1.29)
गरुड SIS (1.27)
चमर S (1.28)
चरण SII (1.18)
चाप s. प्रहरण = 5
चामर s. चमर = S
तुरग 4 (1.17)
तूर्य III (1.29)
तोमर s. प्रहरण = 4
द्विज s. विप्र = IIII
धनुस् s. प्रहरण = 5
ध्वज s. ध्वजपट = IS
ध्वजपट IS (1.28)
ध्वजपताका s. ध्वजपट = IS
ध्वजाग्र s. ध्वजपट = IS
नराधिप s. नरेन्द्र = ISI
नरेन्द्र ISI (1.20)
नूपुर s. आभरण = S
पक्षिनाथ s. गरुड = SIS
पटह s. तूर्य = III
पट्टिश s. प्रहरण = 5
पताका s. ध्वजपट = IS
पदाति 4 (1.17)
पद्मराग s. आभरण = S
पयोधर ISI (1.19)
पाणि s. करतल = IIS
पाद s. चरण = SII
पार्थिव s. नरेन्द्र = ISI
पुरोधस् s. पुरोहित = 4 or 5
पुरोहित 4 or 5 (1.33)
प्रहरण 5 (1.17)
प्रालम्ब s. प्रहरण = 5 (3.23)
बाण s. प्रहरण = 5
बाणासन s. प्रहरण = 5
भाव II (1.29)
भुजगेन्द्र IIIS (1.27)
भूमिनाथ s. नरेन्द्र = ISI
भूषण s. आभरण = S
भोगिन् s. भुजगेन्द्र = IIIS
मणि S (1.28)
मन्त्रिन् 4 or 5 (1.33)
मरकत s. रत्न = S
मातंग s. गज = 4
मुक्ता s. रत्न = S
मुद्गर s. प्रहरण = 5
मौक्तिक s. रत्न = S
युद्ध s. समर = even
योध 4 (1.17)
रत्न S (1.28)
रत्नाकर s. सागर = odd
रथ 4 (1.17)
रथाङ्ग s. प्रहरण = 5
रव s. शब्द = I

**रस** II (1.29)
**राजन्** s. नरेन्द्र = ISI
**रूप** s. स्वरूप = I
**वसुधाधिप** s. नरेन्द्र = ISI
**वारण** s. गज = 4
**वारणेन्द्र** s. गज = 4
**विप्र** IIII (1.18)
**विभूषण** s. आभरण = S
**विषधर** s. भुजगेन्द्र = IIIS
**विषम** uneven, used of पाद, गण or स्थान (1.32)
**विहगनाथ** s. गरुड = SIS
**विहगाधिपति** s. गरुड = SIS
**विहंगपति** s. गरुड = SIS
**वैजयन्ती** s. ध्वजपट = IS
**शक्तिदण्ड** s. प्रहरण = 5
**शब्द** I (1.29)
**शर** s. प्रहरण = 5
**शरासन** s. प्रहरण = 5
**शिलीमुख** s. प्रहरण = 5
**संयुग** s. समर = even
**सम** even, used of पाद, गण or स्थान (1.32)
**समर** even (1.32)
**समराङ्गण** s. समर = even
**समुद्र** s. सागर = uneven
**सागर** uneven, used of पाद, गण or स्थान (1.32)
**सामन्त** s. नरेन्द्र = ISI
**सुपर्ण** s. गरुड = SIS
**सुरगज** ISS (1.27)
**सुरवारण** s. सुरगज = ISS
**सुरहस्तिन्** s. सुरगज = ISS
**स्तन** s. पयोधर = ISI
**स्तनभार** s. पयोधर = ISI
**स्पर्श** I (1.29)
**स्यन्दन** s. रथ = 4
**स्वरूप** I (1.29)
**हरि** s. तुरंग = 4
**हस्त** s. करतल = IIS
**हस्तिन्** s. गज = 4
**हार** s. आभरण = S
**हारलता** s. आभरण = S

## IV. INDEX OF STANZAS IN PRAKRIT

## V. INDEX OF QUOTATIONS IN COMMENTARY

# APPENDIX I

## A. Differences between the readings of the text and the *chāyā* in the commentary which are already noted in the foot notes.

N. B. In all cases, it should be noted that the variant readings from the Commentary are inferred from the Sanskrit renderings of the words in it except where they are actually found in the introductory Pratikas. *a, b, c, d* etc. refer to the lines of a stanza.

Niyama I : 21*cd* ; 30*a*.

Niyama II : 14*a*.

Niyama III : 4*cd* ; 8*b* ; 13*c* ; 16*abc* ; 19*d* ; 20*abc* ; 23*bd* ; 25*d* ; 27*b* ; 29*d* ; 30*c* ; 31*b* ; 32*d* ; 34*d* ; 38*ac* ; 40*ad* ; 51*d* ; 52*a*.

Niyama IV : 4*bd* ; 5*ac* ; 6*b* ; 10*d* ; 12*ab* ; 13*ab* ; 19*a* ; 21*c* ; 24*c* ; 27*d* ; 31*d* ; 34*ac* ; 37*bd* ; 43*ad* ; 44*c* ; 53*d* ; 54*d* ; 56*b* ; 67*ac* ; 68*b* ; 70*c* ; 71*a* ; 76*d* ; 79*d* ; 81*c* ; 82*d* ; 83*b* ; 84*a* ; 85*cd* ; 87*b* ; 88*c* ; 90*c* ; 92*ab* ; 94*bcd* ; 97*a* ; 98*a* ; 105*c* ; 106*d* ; 107*b*.

Niyama VI : 1*d* ; 17*c* ; 19*d* ; 24*c* ; 25*a* ; 27*b* ; 37*cd* ; 41*a* ; 45*a* ; 47*b*.

## B. Differences between the readings of the text and the *chāyā* in the commentary which are not noted in the footnotes. *A cross signifies that the word is dropped.*

Niyama I : 12*d* (तह अ–तथा ×); 15*b* (गरुओ अ–गुरुस्तथा); 16*b* (अ, अ–××); 16*c* (गरुआ–गुरुः); 18*b* (सन्नाइं–नामानि); 22*b* (जत्थ सुअणु–सुतनु यत्र); 23*b* (अ–×); 24*a* (अ–×); 24*c* (चिअ–अपि); 26*b* (अ–×); 27*a* (अ–×); 30*d* (वि–च); 31*b* (वि–च); (पसंसिओ–कथितः) 33 *b* (अ–×).

Niyama II : 3*a* (वीअ–व्रिअअ); 5*b* (भण्णिआ–संज्ञिता); 8*b* (इमं–×); 16*b* (विस्सरूपा–विम्बरूपा).

Niyama III : 2*a* (पाअए–पादः) 5*c* (पय–कथं); 5*d* (अ–×); 8*a* (किं ण दे सि–किं ण एसि); 10*a* (चावचामराइं–चापं च चमरं च); 14*ab* (अ–×); 17*b* (दे–×); 24*c* (अ––अपि); 30*a* (अ–×); 34*a* (ठविज्जउ–स्थापय); 34*b* (ठाइ–ददस्व); 35*b* (अ–×); 40*c* (च–×); 43*c* (वि–×); 44*b* (ससलिल–सललित); 44*c* (अ–×); 50*d* (पाअ अ तिण्णि–पादत्रिक).

Niyama IV : 17*c* (च–वा); 20*a* (वीआ–विइआ); 38*b* (तह अ--अथवा); 41*b* (गीइअई जइ–यदि गीतिका); 49*b* (भूसणेणं–भूषणस्य); *c* (तुज्झ–×); 50*c* (निहित्ता–विनियुक्तः); 53*a* (कुट्टुंभअ–कोट्टुम्बक); *a* (अ–×); 61*cd* (मणोहरए सोहिअए–मनोहरं शोभितं); 64*b* (अ–×); 65*b* (विआणेज्ज–विजानीहि); 80*c* (जहिं–यदि); 83*d* (छंदे–मुग्धे); 90*a* (अइ–एषा); 96*d* (जाणह–जानीहि); 100*d* (जमिअपाअंता–अवस्थितपादान्ता).

Niyama VI : 9*a* (अ–×); 13*c* (रइअव्वो–स्थापयितव्यः); 20*d* (फरिसं पढमं–प्रथमं स्पर्शं); 26*c* (व–×); 43*b* (तहा–तदा); *c* (चउवण्णेसु वि विउणा–चतुर्णां द्विगुणाः); 44*ab* (wholly differ); 47*c* (छउए–तावत्); 48*c* (चिअ–मुग्धे); 50*c* (चिअ–च); 52*d* (अ–×); 58*d* (एक्केक्कं–एकमेव); 60*b* (पिंडजइ–पिण्डय).



## APPENDIX II

### A Brief Statement of the Dvipadis of *four* lines defined in Niyama III
*(in order of length)*

N. B. figures *before* the names refer to the serial number of the metre; those *after* the names refer to the total number of Matras in each line. In the case of Ardhasama Dvipadis they refer to Matras in odd and even lines respectively. Figures given at the end refer to the number of the stanza in Niyama III. For figures within the brackets see N. B. on p. 108.

**A. मात्रागणसम द्विपदी. 37 in all.**

1 मनोवती 11 (4, 5, S) 4.
2 रक्ता 11 (SIS, ISI, S) 7.
3 प्रगीता 12 (4, 4, SS) 6.
4 ज्योत्स्ना 13 (5, 5, IS) 3.
5 मानिनी 13 (SIS, ISI, SS) 8.
6 कौमुदी 14 (5, 5, IIS) 5.
7 तारा 14 (4, 4, ISI, S) 2.
8 सुमनाः 14 (4, 4, 4 except IIS and SS, S) 1.
9 पद्मिनी 15 (4, 4, 5, S) 10.
10 अप्सराः 16 (5, 5, ISI, S) 9.
11 चन्द्रिका 16 (5, 5, 4, S) 17.
12 नन्दिनी 16 (IIS, IIS, IIS, IIS) 20 = छित्तक IV. 54; तोटक V. 27.
13 चन्द्रकान्ता 17 (4, 5, 4, IIS) 22.
14 विद्युत् 17 (4, 5, 4, 4 or 4, 4, 4, 5) 11.
15 विभूति 17 (4, ISI, 4, 5) 15.
16 सरस्वती 17 (4, 5, 5, IS) 13.
17 विजया 18 (4, 4, 4, ISI, S) 18 = मनोरमा IV. 82.
18 सुमङ्गला 18 (4, 4, 4, 4, S) 16.
19 प्रभावती 19 (ISI, 4, ISI, 4, IS) 19.
20 पथ्या 20 (4, 4, 4, 5, IS) 24 = शालभञ्जिका IV. 79.
21 सुप्रभा 20 (4, 5, 4, 4, IS) 14.
22 श्री 20 (IIS, IIS, IIS, IIS, IIS) 21 = भ्रमरावलि IV. 61.
23 हंसी 20 (4, 5, 4, 5, S) 23.
24 सौम्या 21 (5, 5, 4, 4, IS) 27 = रमणीयक IV. 26 = संपिण्डिता IV. 89.
25 अश्वकान्ता 22 (SII, SII, SII, SII, SII, S) 32 33.
26 रत्नमाला 22 (4, 5, 5, 4, IIS) 39.
27 वनराजि 22 (4, 5, 5, ISI, SS) 37.

28 श्यामा 23 (5, 5, 4, 4, ISS) 28.
29 द्रुता 24 (4, 4, ISI, 4, ISI, 4) 36.
30 लक्ष्मी 24 (4, 5, 5, 5, ISS) 30.
31 मेधा 25 (4, 4, 4, 4, 4, ISS) 31.
32 मालती 27 (4, 4, 4, 4, 4, 5, S) 35.
33 रचिता 28 (4, 5, 5, IIS, IIS, ISI, S) 25.
34 वंशस्था 30 (4, 5, 5, IIS, 4, 4, IIS) 38.
35 संगता 30 (SII, SII, SII, SII, SII, SII, SII, S) 34.
36 विनता 31 (4, ISI, 4, ISI, 4, ISI, 5, S) 12.
37 विलासिनी 31 (4, 4, 4, 4, 4, 4, 5, S) 29.

### B. गणसम द्विपदी. 7 in all.

1 कद्रू 13 to 14 (4 or 5, 4, 5) 45.
2 सिद्धि 15 to 18 (4 or 5, 4 or 5, 4 or 5, IS) 41.
3 गन्धारी 17 to 19 (4 or 5, 4 or 5, ISI or IIII, 5) 43
4 ललिता 24 to 25 (4 or 5, 4, 5, 4, 5, S) 46.
5 चित्रा 25 to 26 (2, 4, ISI or IIII, 4 or 5, 4, 5, S) 40
6 भद्रा 26 to 27 (4 or 5, 4, 5, 4, 4, 5) 42.
7 मालिनी 30 to 37 (7 Ganas of 4 or 5, S) 44.

### C. अर्धसम द्विपदी. 8 in all.

1 विपुला 9–13 (IIS, ISS; 4, IIS, ISS) 47.
2 चपला 10–12 (4, ISI, S; 4, 5, IS) 48.
3 सुमुखी 10–13 (4, 4, S; 4, 4, ISS) 49.
4 भामिनी 12–14 (IIS, IIS, IIS; SII, SII, SII, S) 51.
5 श्वेता 12–14 (4, 5, IS; 4, 4, ISI, S) 54.
6 नन्दा 13–15 (4, 5, 4; 4, 4, ISI, IS) 53.
7 प्रसन्ना 14–16 (SII, SII, SII, S; IIS, IIS, IIS, IIS) 52.
8 सारसिका 14–16 (IIS, IIS, IIS, S; SII, SII, SII, SS) 50.



## APPENDIX III

### A Brief Statement of Metres defined in Niyama IV

N. B. Figures within brackets refer to the numbers of stanzas.

I समचतुष्पदी : 1 विलासिनी ( v. 15); 2 निर्वापिता or निध्यायिका (16); 3 वाणासिका (17); 4 परिनन्दित (19); 5 आनन्दित (20); 6 क्रीडनक (21); 7 तरंगक (22); 8 शम्या (23); 9 अधिकाक्षरा (24); 10 नर्कुटक (25; also see v. 34); 11 रमणीयक (26); 12 अडिला (32–34); 13 दण्डक (46); 14 उद्गता (52); 15 कुट्टुम्भक (53); 16 छित्तक (54); 17 भित्तक (55); 18 सामुद्रक (56); 19 गाथ (57); 20 नाराचक (59); 21 ललिता (60); 22 भ्रमरावलि (61); 23 कुमुदक (62); 24 वीथी (67); 25 अवलम्बक (68); 26 वृन्तलक (71); 27 हंसिनी (72); 28 खेटक (76); 29 सालभञ्जिका (79); 30 मनोरमा (82); 31 अन्तुल्लक (83); 32 रास (85); 33 संपिण्डिता (89); 34 ललिता (93); 35 विभूषणा (94); 36 लम्बिता (96); 37 सुधा (97); 38 कुमुदिनी (98); 39 नलिनी (99); 40 पदगलिता (102). Nos. 33 to 40 are all called गलिता.

II अर्धसमचतुष्पदी : 1 खञ्जक (18); 2 मागधिका (28); 3 खण्डोद्गता (47); 4 वैतालीय (48); 5 औपच्छन्दसक (49); 6 आपातलिका (50); 7 बिन्दुतिलक (66); 8 उद्गीतक (81); 9 चन्द्रोद्योतक (84); 10 मुखगलिता (101); 11 विषमगलिता (104).

III विषमचतुष्पदी : 1 चतुष्पद (69).

IV पञ्चपदी : 1 मात्रा (29–30).

V द्विपदी : 1 गाथा (1–8); 2 स्कन्धक (9); 3 गीति (13); 4 उपगीति (14); 5 द्विपथक (27); 6 दोसा (35–36); 7 उत्फुल्लक (63); 8 विशाला (90); 9 विच्छित्ती (91); 10 प्रसृता (92); 11 माला (105).

VI द्विभङ्गी : 1 रड्डा (30–31); 2 मालाशीर्षक (39–40); 3 अधिकाक्षरा–शीर्षक (41–42); 4 संगतक (64–65); 5 एकक (70); 6 खडहडक (73–75); सोपानक (77–78).

VII त्रिभङ्गी : 1 त्रिकलक or निर्वापिताशीर्षक (43–45); 2 एकक (70).

VIII चतुर्भङ्गी : 1 तल (80).

IX पञ्चभङ्गी : 1 तालवृन्त (80).

X बहुभङ्गी : 1 रासक (37); 2 रासक (38).

XI वर्णवृत्तानि : 1 खेटक (76); 2 गाथ (57); 3 छित्तक (54); 4 तरंगक (22); 5 दण्डक (46); 6 नाराचक (58–59); 7 परिनन्दित (19); 8 भित्तक (55); 9 भ्रमरावलि (61); 10 संगतक (64); 11 हंसिनी (72). See note at the end of Notes on Niyama III for others.

# BRIEF NOTES

## NIYAMA I

V. 3 : Mātrā Vṛtta is defined and described in Niyamas I to IV and Varṇa Vṛtta in Niyama V. The last or the VIth Niyama describes the six Pratyayas or Proofs.

V. 13 : 'Know all letters to be short, other than those which stand at the end of a Pāda, those that precede a conjunct consonant, (*Saṁyoga*), those that are long and those that are associated with an Anusvāra or a Visarga.' The commentator points out that a letter which precedes a conjunct is long only when the conjunct is stressed, but not otherwise. The stressing or otherwise of a conjunct is, however, to be known from the practice of the Prākrit writers. Compare *Prākṛta Paiṅgala* I. 14; *Kavidarpaṇa* I. 6.

V. 14 : Make a long letter (represented) by a curve with a straight line at either end (somewhat resembling the letter S), having the measure (i.e., the height) of the joint of a thumb; make a short letter a straight one (i.e., represented by a straight line), having the same measure or height.'

V. 15 : The Caturmātra is of five kinds : Sarvaguru SS; Antaguru IIS; Madhyaguru ISI; Pramukhaguru SII and Sarvalaghu IIII.

V. 16 : This stanza enumerates the 8 kinds of a Pañcamātra : They are :— Prathamalaghu ISS; Dvitīyalaghu SIS; Caturthaguru IIIS, Tṛtīyalaghu SSI; Tṛtīyaguru IISI; Dvitīyaguru ISII; Prathamaguru SIII and Sarvalaghu IIIII.

V. 17 : 'By the names of an elephant, a chariot, a horse, a footsoldier and a warrior know (that) a Caturmātra (is meant); and oh broad-hipped lady, (know) a Pañcamātra (to be meant) by (the names of) the many different weapons.' Compare *Prākṛta Paiṅgala* I. 30.

Vv. 18-19 : The special names of the five Caturmātras mentioned in v. 15 are Karṇa (SS); Kara (IIS); Payodhara (ISI); Caraṇa (SII); and Vipra (IIII) respectively. Even the synonyms of these words are used to convey them.

Vv. 20-22 : Another name of the Gurumadhya Caturmātra, given to it out of great regard for it, is Narendra or 'King'. It is called a 'King' be-

cause when used in its proper place it beautifies the stanza, but when it is used at an improper place, it spoils the whole of it and thus seems to control himself and also others. This 'King' of the Caturmātras must not be employed when a Caturmātra in general is prescribed in the lines of a stanza. Thus, for example, it must not be employed at the uneven Aṁśas of a Gāthā, a Skandhaka, an Upagīti and a Gīti, even when it is said that a Yodha, i.e., a Caturmātra in general, is to be employed at all the Aṁśas of a Gāthā except the 8th, the 16th and the 6th at IV. 1 below.

V. 23 : This Narendra Caturmātra must be employed at the 6th Aṁśa of all the abovementioned metres, namely, Gāthā, Skandhaka, Gīti and the Upagīti, except the last one (where only a single short letter is prescribed); but in the absence of it, only the Dvija or the Vipra Caturmātra, i.e., the Sarvalaghu, should be used and none else.

V. 25 : When however, a Vipra Caturmātra is thus employed, let a word be finished with the 1st of its 4 letters and a new one begin with the 2nd; the example is furnished by the stanza itself, where a word is concluded with the 1st letter of the Vipra Caturmātra *mmi kuṇasu* and another begun with the 2nd. If again this Caturmātra is used at the 5th Aṁśa in the 2nd half, avoid the combination of the first letter of it with the preceding word, i.e., let a new word begin with the first letter itself. The example is again supplied by the stanza itself, *parihara* being the Caturmātra at the 5th Aṁśa. This particular direction is mentioned in the case of the Sanskrit Gāthā, or Āryā as it is called, even by Hemacandra, *Chandonuśāsana* (N.S.P. edition of 1912, p. 27*a*, lines 8-11), Jayadeva, *Jayadevacchandas* IV. 6-7 (see *Jayadāman* p. 12-13), and Kedāra, *Vṛttaratnākara* II.2 (*Jayadāman* p. 73).

V. 26 : This Narendra Caturmātra is however not prohibited even at the uneven Aṁśas of the metres Adhikākṣarā, Nirvāpita, Bāṇāsikā and Śīrṣakas. I am unable to understand what is meant by the word *Śīrṣaka* in the stanza; for a Śīrṣaka is a double or a triple metre, the word being applied in general to any couplet or triplet. In the sequel Virahāṅka gives 3 such Śīrṣakas at IV. 39-40, 41-42 and 43-45; in the last two cases it is made up of an Adhikākṣarā with a Gīti and Adhikākṣarā, Nirvāpitā and a Gīti at the end respectively. But in the first case we have a stanza in an unspecified metre coupled with a Gīti. Perhaps the rule is meant for any other metres like the Adhikākṣarā and Nirvāpitā which are used as the constituents of the Śīrṣaka; it

